॥ ओं ॥

॥ श्री रामचन्द्रायनमः ॥

# ॥ वैयाकरणभूषणसारः ॥

महामहोपाध्याय श्रीकौण्डभट्ट निर्मितः ।

महामहोपाध्यायहरिवल्लभविरचितया दर्पणाख्यया व्याख्यया सम्बलितः ।

श्री पण्डित वासुदेवशर्मचिपाठिना संस्कृत्यसंशोध्य च

श्रीकाश्याम्

अमर यन्त्रालये

बहुरसिकजनमनस्तोषायमुद्रयित्वा

प्रकाशितः ।

श्री संव्वत् १९४२ मार्ग शु० १०

मूल्यम् २)

# वैयाकरणभूषणसारः ॥

श्रीगणेशायनमः ॥

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ॥
स्फोटरूपं यतः सर्वं जगदेतद्विवर्त्तते ॥१॥

ॐ श्रीगणेशायनमः ॥ रमाप्रेमाऽऽमज्जज्जगदवनदक्षं मधुहृतश्रुतिस्तोमाहृत्या परिजनितवेदाननमुदम् । अखण्डानन्दाढ्यम् निखिलजनहृत्कञ्जनिलयम् हयग्रीवं वन्दे प्रकृतकृतिविघ्नच्युतिकृते ॥१॥ सत्येकस्मिन्नपि बाधके समवहितसाधकसद्भावादपि कार्य्योत्पत्तेरदर्शनादपेक्षितप्रारिप्सितप्रत्यूहापोहायानुष्ठितम् भगवच्छ्रुतिरूपम् मङ्गलं ग्रन्थकृच्छिष्यशिक्षार्थमादौ निबध्नाति। श्रीलक्ष्मीरमणमिति। अधिकरणव्युत्पन्नल्युडन्तरमणशब्देन कर्तृषष्ठ्यन्तलक्ष्मीपदस्य समासः तेन च श्रीसहितशब्दस्य मध्यमपदलोपी समासः शाकपार्थिवादेराकृतिगणत्वात् तदुपादानञ्च सशक्तिकस्यैव भगवतो जगन्निर्माणकारणत्वमिति ध्वनयितुम् । नौमीति । णुस्तुताविति धातोरस्मच्छब्दाप्रयोगेऽपि गम्यमानतदर्थसामानाधिकरण्यस्य लकारार्थकर्त्तरि सत्वाद्वर्त्तमानक्रियाद्योतकलडुत्तमपुरुषः। अस्मद्युतमद्व्यत्र पूर्वसूत्रात् स्थानिनीत्यस्यानुवृत्तेः। स्तुतिश्चोत्कृष्टगुणवत्वप्रकारकबोधानुकूलो व्यापारः।स एव च प्रकृतधात्वर्थः।बोधरूपधात्वर्थफलाश्रयत्वाल्लक्ष्मीरमणस्य कर्मता। एवञ्च वैयाकरणमते प्रकृते श्रीसहितलक्ष्मीरमणाश्रयकोत्कृष्टगुणवत्वप्रकारकबोधानुकूलो मदभिन्नाश्रयको वर्त्तमानशब्दप्रयोगरूपो व्यापार इति वाक्यार्थः। नन्वेतच्छास्त्रप्रवर्त्तकत्वेन शिवस्याभ्यर्हिततरत्वात्तत्स्तुत्यात्मकमङ्गलमपि कुतो नाचरितमत आह। गौरीरमणरूपिणमिति।

स्वरूपपररूप पदेन गौरीरमणपदस्य षष्ठीसमासः ततोऽदन्तत्वनिबन्धनो म-
त्वर्थीय इति गौरीरमणो रूपं स्वरूपं यस्येति षष्ठ्यर्थबहुव्रीहिणोक्तार्थलाभे-
पि लाघवमूलकनकर्मधारयादिति न्यायस्य प्रत्ययस्थादिति सूत्रेऽसुव्रत इ-
ति प्रयोगमुदाहरता भाष्यकृता ऽनादृतत्वान्न मत्वर्थीयानुपपत्तिः दृश्यते
चेदृशस्थले प्रयोगद्वैविध्यं शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे इत्यादि
तथा च तदभिन्नमित्यर्थः प्रमाणं चाद्योक्तपुराणवाक्यमेव। एवं च कार्यवैचित्र्यस्य
कारणवैचित्र्यनियम्यत्वाज्जगदवनादिकार्यवैचित्र्योपपत्तये तत्तद्गुणप्र-
धानमूर्तिपरिग्रहो भगवतो न पारमार्थिको भेद इति स्तुतिकर्मता शिवस्य
नाऽनुपपन्नेतिभावः। उत्कृष्टगुणवत्त्वमेवाविष्करोति। यत इति। वेदान्तिमते
मायाशवलस्य ब्रह्मणो जगदुपादानत्वाज्जनिकर्तुरित्युपादानहेतावपादान-
संज्ञानिबन्धना पञ्चमी गुणइत्युक्तविभाषेत्यस्य न प्रसक्तिः तथा च यस्मादु-
पादानहेतोरित्यर्थः सर्वं जगत्स्फोटरूपं विवर्ततइति योजना। स्फुटत्यभिव्य-
क्तीभवत्यर्थोस्मादिति स्फोटो नामाद्यात्मकः शब्दः बाहुलकादपादाने घञ्
रूप्यतेनिरूप्यत इति रूपमर्थः तयोः समाहारद्वंद्वेनपुंसकैकवचनान्तम् वा-
च्यवाचकस्वरूपमिति तदर्थः। नामरूपे व्याकरवाणीतिश्रुतेः।एतत्। अत्य-
न्तसान्निध्येन बुद्ध्या विषयीक्रियमाणम्। विवर्त्तते। उत्पद्यतइत्यर्थः।धातोरुप-
सृष्टत्वात्। ननु नामरूपात्मकस्य सदेव सौम्येदमग्रआसीदिति श्रुत्या सनात-
नत्वबोधनात्कथमुत्पत्तिशालित्व मतआह। जगदिति। वर्तमानेपृषदिति नि-
पातनात्साधु। तथा च गच्छति तिरोधत्त इतिव्युत्पत्त्यातिरोधानउक्तं यत्ति-
रोधत्ते तदाऽऽविर्भवतीति नियमेनाऽऽविर्भावस्य लाभात्सएवात्रोपसिष्टार्थः
एवं च सत्त्वेनैतस्य सनातनत्वेपि नामत्वादिनाऽऽविर्भावाद्यभ्युपगमान्नोक्त
श्रुतिविरोधो नापि तस्मादेतस्मादा आत्मन आकाशः संभूत इत्याद्युत्प-
त्तिबोधकतद्विरोधः। यत्किञ्चिन्नामरूपात्मकस्यान्यतोपि सम्भवादाह। सर्व-
मिति। यावदर्थकम् उत्पत्तिरूपलक्षणमवनादेः। तेन जगत्कर्तृत्वादिरूपोत्कृ-
ष्टधर्मस्य स्तुत्यतावच्छेदकस्य लाभः। अत्र च यतो वा इमानि भूतानि जाय-

## अशेषफलदातार म्भवाम्बुधितरणे तरिम् ।

न्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीत्याद्याः श्रुतयः प्रमाणम् । मतान्तरे यत इति पञ्चमी निमित्तहेतुतायां व्युपसृष्टहतुधातोरादाना- सम्बन्धरूपोत्पत्तिरर्थः । ननु सर्वान्तर्गतवियदाद्यात्मकपदार्थस्यानादितया कथमुत्पत्तिमत्त्वमत आह । जगदिति । स्थावरजङ्गमात्मकमित्यर्थः । तथाच गच्छति नश्यतीति व्युत्पत्त्या विनाशित्वे बोधिते विनाशिभावस्य जन्यत्वनियमेन तस्योत्पत्तिर्न विरुद्धेति भावः । एतत्कल्पे स्फोटपदं शास्त्रानुमानप्रतीतपरं तादृशरूपं यस्येति व्युत्पत्त्या स्फोटरूपमिति भगवतो विशेषणं बोध्यम् शेषं पूर्ववत् । यद्वा स्तुत्यतावच्छेदकरूपं प्रदर्शयितुं विशिनष्टि । स्फोटरूपमिति । वक्ष्यमाणव्युत्पत्त्या समस्तार्थप्रकाशकस्वरूपमित्यर्थः । तदुपपादयन्नेव स्तुत्यतावच्छेदकान्तरमपि दर्शयति । यत इति । यस्मादुपादानादिति सार्वविभक्तिकतसिना यस्मिन्नधिष्ठाने इति वार्थः । विवर्तश्चातात्त्विकोऽन्यथाभावः अपरित्यक्तपूर्वरूपस्य रूपान्तर प्रकारकप्रतीतिविषयत्वमिति यावत् । जगच्छब्दश्च रूढ्या नामरूपपरः तथाच यस्मिन्नधिष्ठाने एतत्सर्वं जगद् भूतेन्द्रियादि तत्तद्रूपेण प्रतिभातीत्यर्थः । नेह नानास्तीति श्रुत्या बोधितबाधस्यापि जगतः प्रतिभासेऽधिष्ठान सत्ताया एव नियामकत्वात्समस्तार्थप्रकाशकत्वोपपत्तिरप्यस्तु तत्स्वरूपस्यैव ब्रह्मणो जगद्रूपेण विवर्तनादविकारित्वरूपोत्कृष्टधर्मावगतिश्च । अत्रच तमेव भान्तमनुभाति सर्वमित्याद्याः कूटस्थस्वरूप प्रतिपादिकाश्च श्रुतयः प्रमाणत्वेनानुसन्धेया इति भावः । अत्र भगवद्विषयकरतिभावस्य हेत्वलङ्कारोऽङ्गम् ॥१॥ जगदुपादानत्वेन स्तुत्वाऽपवर्गसाधनज्ञानविषयत्वेन तच्छा-

§ नैयायिकमते इत्यर्थः तेषां मते समवाय्यसमवायिनिमित्तभेदेन कारणत्रयस्यैव स्वीकारात् ।

§ अभेदेनाभिधा हेतु र्हेतो र्हेतुमता सहेति लक्षणात्

## शेषाऽशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥ २ ॥

स्वव्याख्यातृशेषभूषणत्वेन च स्पुवञ्शेषोक्तसमस्तसिद्धान्तप्रतिपत्तये प्रार्थयते। अशेषेति। फलम्। प्रत्युद्देश्यम्। स्वर्गादियत्किञ्चित्फलदातृत्वस्य देवतान्तरसाधारण्या दाह । अशेषेति । तथाचापवर्गरूपफलस्या प्यशेषपदेन कुक्षीकृतत्वात्तद्दातृत्वस्यानन्यसाधारण्यात्प्रार्थ्य तावच्छेदकधर्मलाभः। तदेवविशदयति । भवाब्धीति । भव एवाब्धिरिति रूपकम्§ अब्धीयत्वाहादिसद्दृशकामलोभाद्याक्रान्तत्वाद् दुरवगाहत्वेन भवे तदारोपः। तेनच भवस्य दुस्तरत्वम् व्यज्यते। तस्य तरणं पारदेशप्राप्तिस्तस्मिन्नित्यर्थः। तरिम्। साधनम्। यद्यपि तरत्यनयेतिव्युत्पत्यातरणसाधनन्तरिपदार्थस्तथापि तद्घटकीभूततरणस्य सन्निहितपदेनैव लाभात्पुनरुक्तिर्माभूदिति विशेष्यमात्रपरतया व्याख्यातं मुक्तिसाधनज्ञानविषय मितियावत्। मुक्तिश्च वेदान्तिमतेऽज्ञाननिवृत्तिसमकाला स्वरूपप्राप्तिः। नन्वज्ञाननिवृत्तेरधिकरणाऽनतिरिक्तायाः स्वरूपस्यापि च सिद्धत्वात्तद्रूपायास्तस्यास्तत्वज्ञानसाध्यत्वानुपपत्तिरिति चेन्न। परेषां प्रागभावस्येव सिद्धाया एवाऽज्ञाननिवृत्ते र्योगक्षेमसाधारण्याः साध्यतायाः सम्भवादधिक मन्यतोऽवधेयम् । नैयायिकास्तु आत्यंतिकदुःखध्वंसोमोक्षः। ध्वंसस्यात्यन्तिकत्वञ्च स्वसमानाधिकरणदुःखासमानकालिकत्वम् । अत्रैव तत्वज्ञानस्योपयोगः। विशेषांशस्य स्वासाधारणसामग्र्या एव सम्भवान्नित्यसुखाभिव्यक्ति र्वा स इत्याहुः। शेषाऽशेषेति। कर्मधारयोत्तरपदः षष्ठीतत्पुरुषः तस्य च लाभपदेन समासो लाभायेदमितिविग्रहे चतुर्थ्यन्तलाभपदस्यार्थपदेन सः शेषः पतञ्जलिः शेषांशत्वात्तस्य तथाच शेषोक्तभाष्यप्रतिपादितनिखिलसिद्धान्तज्ञानायेत्यर्थः। शेषभूषणमिति। शेषोऽनन्तः स भूषणं यस्येत्यर्थः यतोऽस्य भूषणं शेषोऽतोऽस्य शेषोक्तसिद्धान्तलब्ध्यै प्रा-

§ विषय्यभेदताद्रूप्याद्रञ्जनं विषयस्य यत्रूपकमितिलक्षणात्

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधम्।
द्वैतध्वान्तनिवारणादिफलिका म्पुम्भावबाग्देवताम्॥
ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभि र्दूषितान्।
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये॥ ३॥

र्थनमितिसाभिप्रायविशेष्यस्योपादानात्परिकरांकुरोऽलङ्कारोऽत्र भगवद्विषयकरत्यङ्गम् ॥२॥ प्रेक्षावत्प्रवृत्तय इतरग्रंथेभ्यः स्वग्रन्थस्योत्कर्षं प्रदर्शयन्नेव दर्शनीयविषयप्रयोजनसम्बन्धाधिकारिणां मध्येऽवश्यप्रदर्शनीयं विषयं दर्शयति। पाणिन्या दीति। पुम्भाववाग्देवतामिति पितु र्विशेषणम् पुंसोभावो यस्याइति व्यधिकरणबहुव्रीहिपूर्वपदकः कर्मधारयो वाग्देवतापदेन। अथवा पुंभावशब्दोऽर्शआद्यजन्तः तथाचाऽऽविष्कृतपुंविग्रहां सरस्वतीमित्यर्थः। द्वैतध्वान्तेति। द्वाभ्यां प्रकाराभ्यामितो ज्ञातो विरुद्धोभयधर्मप्रकारकज्ञानविषयो धर्मीति यावत्। यद्वा द्वयो र्भावो द्विता स्वनिष्ठैकविशेष्यतानिरूपितप्रकारतासम्बन्धेन विरुद्धनानाधर्माश्रि धर्मिणोपि भावत्वसम्भवाद्वितापदार्थोपि धर्म्येव तत्र भवं द्वैतं संशयात्मकज्ञानम्। अथवा द्वयोः अनेकस्य भावो द्विता नानात्व न्तत्सम्बन्धि द्वैतं परमार्थदशायामद्वितीयस्यैव ब्रह्मणोंगीकारेण श्रुतिबाधितनानात्वावगाह्यन्तःकरणवृत्तिविशेषरूप मविद्यापरपर्यायं मिथ्याज्ञानम् तदेव ध्वान्तं तमस्तत्वाऽऽच्छादकत्वात्तन्निवारणमेकं मुख्यं फलं यस्यास्तामित्यर्थः। अनधिकारिणां स्वाश्रितानामेकतरकोटिकज्ञानोत्पादकत्वे नाधिकारिणां सम्भावावलम्बनज्ञानप्रदत्वेन पुम्भाववाग्देवतायास्तन्निवर्तकत्वमिति भावः। ढुण्ढिङ्गणपतिं प्रणम्येत्यनुषज्यते। सिद्धान्तानिति। भाष्यकारादिनिर्णीतार्थाः सिद्धांतास्तानित्यर्थः उपपत्तिभिःसाधकप्रमाणोपन्यासरूपाभिर्युक्तिभिरित्यर्थः। दूषये उपपत्तिभिरेव बाधकप्रमाणोपन्यासरूपाभिरित्यर्थः। एतेना ऽन्यग्रंथेभ्यः

§ उक्तिर्विशेषणैः साभिप्रायैः परिकरोमत इतिलक्षणात्

प्रारिप्सितप्रतिबन्धकव्यूहोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते।

फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।
तत्रनिर्णीत एवार्थः सङ्क्षेपेणेह कथ्यते ॥ १ ॥

उद्धृत इत्यत्राऽस्माभिरिति शेषः। भाष्याब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितासारत्वा

स्वग्रन्थस्योत्कृष्टत्वं ध्वनितम् तथाच वैयाकरणसिद्धान्तोत्र विषयःप्रदर्शितस्तेनैवतज्ज्ञानं प्रयोजनं प्रतिपाद्यप्रतिपादकभावः सम्बन्धः सिद्धान्तजिज्ञासुरधिकारीति त्रयोन्येपि दर्शितप्राया इति भावः ॥१॥ ग्रन्थादावनुष्ठितस्य मङ्गलस्य तन्निबन्धनस्यच प्रयोजनमाह। प्रारिप्सितेत्यादिना। समाप्तये इति विहाय प्रतिबन्धकोपशमनायेत्युक्त्या अलौकिकाऽविगीतशिष्टाचारानुमितफलस्य विघ्नध्वंस एव फलं जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टानां मङ्गलानुष्ठानान्मङ्गलसमाप्त्योः शरीरनिष्ठप्रत्यासत्त्यैव कार्यकारणभावस्य कल्पनीयतया तस्य च नास्तिकसमाप्तौ व्यभिचारेण समाप्तेः स्वत्वासम्भवात् किन्तु कार्यमात्रम्प्रति प्रतिबन्धकाभावहेतुतया दुरितरूपप्रतिबन्धकनिरासएव मङ्गलस्योपयोगो नतु समाप्तावपि विघ्नध्वंसेनान्यथासिद्धत्वात्समाप्तिस्त्वन्यत्र क्लृप्तत्कारणकलापादिति सूच्यते। फणिस्मरणेति। फणी शेषः शेषाख्यं धाम मामकमिति भगवदुक्तो स्तत्स्मरणस्य विघ्ननिवारकत्वान्मङ्गलस्य नतिस्तुत्यादिभेदेन नानात्वमिति सूचयितुं स्मरणेत्युक्तम्। प्र-

पत्तौ पाणिनीयानामनुपादेयतापत्तेः । तत्र निर्णीतइत्युक्तिरितोप्यधिकंजिज्ञासुभिश्शब्दकौस्तुभे द्रष्टव्यमितिध्वनयितुम्

प्रतिज्ञातमाह ॥

फलव्यापारयोर्द्धातुराश्रये तु तिङः स्मृताः ॥
फलेप्रधानंव्यापारस्तिङर्थस्तु विशेषणम् ॥

धातुरित्यत्र स्मृत इति वचनविपरिणामेनान्वयः ॥

तिजानीत इति । प्रतिज्ञाफलं तु शिष्यावधान बोध्यम् । उद्धरणकर्त्रीकांक्षायामाह । अस्माभिरिति । कथ्यते इति हर्यादिनिबद्धकारिकाभिरितिशेषः । तत्रस्फोटस्यार्थबोधजनकत्वात्तेनैवाकांक्षानिवृत्तेश्च वाक्यस्फोटस्य वाक्यस्फोटोति निष्कर्षे इत्यादिना सिद्धान्तयिष्यमाणत्वे पि प्रतिवाक्यंसङ्केतग्रहासम्भवा तदन्वाख्यानस्य लघूपायेनासुकरत्वाच्च तत्र कल्पनया पदानि विभज्य तेष्वपि प्रकृतिप्रत्ययभागां स्तथैव प्रविभज्य कल्पिताभ्या मन्वयव्यतिरेकाभ्या स्तदर्थेष्वपि प्रकृतिप्रत्ययानामनादिसङ्केतबोधद्वारा साधुत्वान्वाख्यायके महर्षिप्रणीते शास्त्रे प्रक्रियानिर्वाहाय पदवर्णस्फोटावपि सम्मताविति दर्शयंस्तिङन्तार्थप्रधाने सुप्तिङ्चयादिरूपे वाक्ये धात्वर्थस्य प्राधान्यात्तमेवादौ निरूपयितुमाह मूले । फलव्यापारयोरिति । तत्रधातुरित्यस्य स्मृता इति न विशेषणं विभिन्नवचनान्तोपस्थापितत्वात् विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षायां विशेषणवाचकपदयोः समानवचनत्वनियमा दतएव नीलोघटाइत्यादे र्न साधुत्वं तद्विवक्षायांतु वेदाः प्रमाणं जात्याकृतिव्यक्त यः पदार्थ इत्यादौ विभिन्नवचनत्वमपि नच प्रकृते तद्विवक्षायां वीजमस्तीत्यतोवचनविपरिणामेनान्वयंदर्शयति भूषणसारे । धातुरित्यत्रेति । ननुयदुद्देशेनस्युतेर्लौकितो वा प्रवृत्तिरवगता

## फलंविक्लित्त्यादि

सत्वम् अन्येच्छानधीनेच्छाविषयमितियावत् । तदुक्तं हरिणा । यस्यार्थस्य-प्रसिद्ध्यर्थमारभ्यंते पचादयः । तत्प्रधानं फलं तेषां न लाभादिप्रयोजनमिति स्वरितञितइति सूत्रे पि फलपदस्य तस्मिन्नेवप्रसिद्धेश्च । तथाच तादृशफलस्य धातुवाच्यत्वे विक्लित्यनुकूलव्यापारदशायां तण्डुलस्य धात्वर्थतादृशफलाश्रयत्वाभावात् कर्मत्वानुपपत्तिस्तज्जन्यतादृशफला ऽऽश्रयस्य तदापत्तिश्चेत्यत आह । फलंविक्लित्त्यादीति । अयमाशयः । फलपदस्य लोकरूढ्या तादृशार्थोपस्थापकत्वेप्यत्र पारिभाषिकार्थपरतैवान्यथासकर्मकत्वादिव्यवहारो दुरुपपादःस्यात् तत्त्वंच तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वं तद्धात्वर्थत्वं वा जन्यत्वं च जन्यत्वप्रकारकप्रतीतिविषयत्वम् तेन सत्तादौ नातिप्रसंगः गम्याद्यर्थव्यापारजन्यविभागादावतिप्रसंगवारणाय विशेष्यं तदर्थव्यापारेऽतिप्रसक्तिनिरासायच सत्यंतम् तच्च विक्लित्यादि प्रकृतपच्यादिशक्यता तत्तद्रूपेणैव तथाबोधस्यानुभवसिद्धत्वात् । यक्ष्यति वाक्यार्थप्रदर्शनावसरे विक्लित्त्यनुकूलो व्यापार इति धातुत्वादिकमजानतोपि बोधोत्रेति । परेतु कर्तृप्रत्ययसमभिव्याहारे तद्धात्वर्थजन्यत्वेसति तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतावत्त्वम् जन्यता चाऽऽरोपिताऽनारोपिता वा इत्यन्यदेतत् विभागजन्यसंयोगादिरूपे पतत्यर्थे विभागसंयोगयोः फलत्ववारणायोभयम् कर्माख्याते फलस्य विशेष्यतयैव भानात्त्रातिप्रसंगवारणाय कर्त्रादीतीत्याहुः । तच्चिन्त्यम् । अनुगतफलत्वानिरुक्तेः विभागजन्यसंयोगे पतत्यर्थत्वाभावस्य वक्ष्यमाणतया व्यावर्त्त्याऽप्रसिद्धेश्चेतदधिकमग्रेवक्ष्यते । ननु व्यापारत्वं न फलप्रयोजकक्रियात्वम् आत्माश्रयात् क्रियात्वस्यैव हि तत्त्वात् दंडादिव्यापारस्य धात्वर्थत्वापत्तेश्च नचेष्टापत्तिः धात्वर्थव्यापाराश्रयस्यैव कर्तृतायाः वक्ष्यमाणतया तदाश्रयस्य दंडादेः कर्तुराख्यातेनाभिधानाद्दंडेन देवदत्तः पचती-

व्यापारस्तुभावनाऽभिधा साध्यत्वेनाऽभिधीयमाना क्रिया। उक्तञ्च वाक्यपदीये

यावत्सिद्धमसिद्धं वा साध्यत्वेनाऽभिधीयते।

त्वादौ दण्डादिपदोत्तरं तृतीयाऽनापत्तेः प्रथमापत्तेश्च कर्तृकरणसंज्ञयोरेकाकारीयतया संज्ञाद्वयसमावेशाऽसंभवेनाऽभिमतकरणसंज्ञायाः परया कर्तृसंज्ञया बाधात्। किंच प्रयोजकत्वं यदि साक्षाज्जनकत्वम् तदा पचतीत्यादौ कर्तृव्यापारस्य धात्वर्थत्वाऽनापत्तिः तस्य करणव्यापारद्वारैव फलजनकत्वात्। यदि जनकजनकसाधारणम् तदा तण्डुलक्रयणस्यापि फलप्रयोजकक्रियात्वात्तद्दशायामपि देवदत्ताऽऽदौ पचतीति प्रयोगाऽऽपत्तिः तण्डुलाऽऽदिक्रयणाऽऽदिव्यावृत्तस्य तादृशप्रयोजकत्वस्य निर्वक्तुमशक्यत्वाच्च। अतएव तज्जन्यत्वे सतितज्जन्यजनकत्वरूपं तन्त्राऽन्तरप्रसिद्धं तत् तदवच्छिन्नस्यधातुवाच्यत्वे साक्षाद्विक्लित्तिजनकाऽन्तिमाऽग्निसंयोगदशायामेव पचतीति प्रयोगः स्यान्नत्वधि श्रयणाऽऽदिदशायामपि तेषामन्तिमाऽग्निसंयोगेनाऽन्यथासिद्धतया विक्लित्त्यजनकत्वादित्यतआह।व्यापारस्त्विति।साध्यत्वे नेत्युपलक्षणेतृतीया तथाच पदाऽन्तरसमभिव्याहाराऽप्रयोज्यसाध्यत्वप्रकारकाऽभिधानविषयत्वं व्यापारत्वमित्यर्थः।अभिधानस्य प्रकारतावत्त्वं विषयतानिरूपकत्वं चौपचारिकंतादृशसाध्यत्वप्रकारकप्रतीतिविषयत्वमितियावत्।घटं करोतीत्यादौ कृञ्समभिव्याहारे घटादीनामपि साध्यत्वेन प्रतीतेरतिप्रसङ्गभङ्गाय पदान्तरसमभिव्याहाराऽप्रयोज्येति प्रतीतिविशेषणम् तदसमभिव्याहारे तेषां तत्त्वेनाऽप्रतीतेः अधिश्रयणाऽऽद्यऽधःश्रयणपर्यन्तक्रियाकलापस्य पदाऽन्तरसमभिव्याहारमन्तरेणाऽपि साध्यत्वेन प्रतीयमानत्वादुक्तव्यापारत्वमविकलमिति तदनवच्छिन्ने पचादिधातुवाच्यता नाऽनुपपन्नेति भावः॥ उक्तार्थस्यस्वोत्प्रेक्षितत्वम् निरस्यति। उक्तञ्चेति। यावदिति। सर्वमित्यर्थः। सर्वपदा

**आश्रितक्रमरूपत्वात्सा क्रियेत्यऽभिधीयते इति ॥**
**नच साध्यत्वेनाऽभिधाने मानाऽभावः, पचति, पाकः,**
**करोति, कृतिरित्यादौ धात्वर्थाऽवगमाऽविशेषेऽपि क्रि**
**यान्तराऽऽकाङ्क्षाऽनाकाङ्क्षयोर्दर्शनस्यैवमानत्वात् ।**
**तथा च क्रियान्तराऽऽकाङ्क्षाऽनुत्थापकताऽवच्छेदकरूपं**

र्थमेव विवृणोति । सिद्धमित्यादिना । सिद्धम् विद्यमानध्वंसप्रतियोग्यऽपा
चीदित्यादौ । असिद्धम् भूतभिन्नवर्त्तमानं तादृशप्रागभावप्रतियोगि च प-
चति पक्ष्यतीत्यादौ । साध्यत्वेन वक्ष्यमाणस्वरूपेण । अभिधीयते तत्प्रका-
रकप्रतीतिविषय इत्यर्थः । क्वचिद्विवक्ष्यते इति पाठः । एतेन क्रियाशब्दस्य
रूढिः प्रदर्शिता यौगिकत्वमप्याह । आश्रितेति । आश्रितं क्रमरूपं यस्या
स्तत्वात् पूर्वाऽपरीभूताऽवयवकत्वादित्यर्थः । तदीयाऽवयवानामधिश्रयणा-
द्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन सोच्यते यत्र च न क्रमि-
कावयवकोव्यापारस्तत्र रूढिरेवाऽऽदरणीया पौर्वापर्यारोपो वा फल-
स्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानमत एव तस्याऽव-
वाचकस्य धातुत्वसिद्धिरिति भावः । पाकइति । यद्यपि साध्यत्वेनोपस्थि
तिरप्यत्र कथमन्यथा स्तोकम्पाक इत्यादौ स्तोकादीनां कर्मता तथापि
तत्रधातूपस्थाप्यभावस्य गुणतया प्रधानीभूतघञुपस्थाप्यस्य सिद्धतैवेत्याश-
यः । पर्यवसितार्थमाह । तथाचेति । क्रियान्तरेति । अयमाशयः । यद्धर्म-
वत्ताज्ञानात् क्रियान्तराऽऽकाङ्क्षोदयस्तादृशज्ञाने प्रकारतयाऽवच्छेदकं य-
त्सिद्धत्वम् तद्भिन्नत्वं ज्ञाननिष्ठतादृशाऽऽकाङ्क्षोत्थापकत्वाभावाऽवच्छेदकं
वा साध्यत्वम् साध्यज्ञानस्य तु नाऽऽकाङ्क्षाप्रतिबन्धकत्वं कृत्सकारणाभावा-
देव तदनुत्पादात् । न च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मरूप-
साध्यत्वेन धात्वर्थोपस्थितौ कथमेवं सुखं यायादित्यादावाकाङ्क्षाभा-

साध्यत्वं तद्रूपवत्त्वमसत्त्वभूतत्वम् एतदेवाऽऽदाय।
असत्वभूतो भावश्च तिङ्पदैरभिधीयते।
इति वाक्यपदीयमिति द्रष्टव्यम्

वेन क्रियान्तरान्वयो न स्यादिति वाच्यम्। तत्रापि चेत्पदसमवधानेना-काङ्क्षोत्थापनात्। ह्यिरुगादीनां क्रियाप्राधान्यव्यवहारस्तु तदर्थस्य क्रिया-मात्रविशेषणत्वात्। अतएव न ह्यिरुगाद्यर्थे कारकाणामन्वयस्तेषां क्रिया-न्तरसाकाङ्क्षत्वादिति। वस्तुतस्तु सिद्धत्वज्ञाने साध्याकाङ्क्षावत् पचाद्यर्थं साध्यतयाऽवगते किमस्य साधनमित्याकाङ्क्षोदयेन साधनाकाङ्क्षोत्थापक-तावच्छेदकरूपवत्त्वमेव साध्यत्वम्। अत एवैतदेवादायाग्रिमग्रन्थसङ्गति-रन्यथा पचतिभवतीत्यादौ पूर्वोक्तरूपाभावेन तदसङ्गतिः स्पष्टैव। उक्तञ्च हरिणा। प्रयोगार्हेषु सिद्धः सन्भवत्योऽर्थो विशेषणैः। प्राक् च साधनसम्ब-न्धात् क्रियान्नैवोपजायत इति साधनं हि क्रियां निर्वर्तयतीति सुट्कादि-तिसूत्रस्थभाष्यमप्येतत्कल्पेऽनुगुणमित्यवधेयम्। केचित् पचतीत्यनुगत-व्यवहारादस्तिपचित्वादिकम् जातिः तथाच क्रमिकानेकव्यक्तिवृत्तिजा-तिरेव क्रिया। साध्यत्वं च तस्या व्यक्तिद्वारकमेव स्फोटवदस्याः क्रमवद्भिः वर्णैरभिव्यक्तिः। जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम्। असाध्याव्य-क्तिरूपेण सा साध्येवोपलक्ष्यते। इति वाक्यपदीयं चात्रकल्पे मानमित्याहुः। साध्यत्वासत्त्वभूतपदयोः पर्यायतामाह। तद्रूपवत्त्वमिति। एतदेवेति। निरुक्तरूपासत्त्वभूतत्वमेवेत्यर्थः। असत्वभूतइति। भावप्रधानमाख्यात-मिति निरुक्तार्थप्रतिपादकमेतत्। सत्वस्वभावमापन्ना व्यक्तिर्नामभिरुच्यते इत्यस्य पूर्वार्द्धम्। भावश्चेति। चोऽवधारणे उक्तभाव एवेत्यर्थः। तेन सत्त्वभूत-स्य तस्य व्यवच्छेदः। तिङ्पदैरिति। बहुवचनस्वारस्येन तिङन्तपदैरित्य-र्थः। अभिधीयते। बोध्यतइत्यर्थः। तेन कृदन्तपदैरसत्त्वाऽवस्थभावाऽभिधाने ऽपि न क्षतिरिति भावः तिङन्तपदैरिति भावाऽऽख्यातोऽभिप्रायेणेति क-श्चित्। अयंचेति। साध्यत्वेन प्रतीयमानो व्यापारश्चेत्यर्थः। वाच्यइति। पच-

अयंच व्यापारः फूत्कारत्वाऽधःसंतापनत्वयत्नत्वादितत्तद्रूपेण वाच्यः। पचतीत्यादौ तत्तत्प्रकारकबोधस्याऽनुभवसिद्धत्वात्। नच नानाऽर्थताऽऽपत्तिः तदादिन्यायेन बुद्धिविशेषादेः शक्यताऽवच्छेदकानामननुगमकस्य सत्वात्। आख्यातक्रियैकत्वव्यवस्था

त्यादि शक्यइत्यर्थः। अनुभवसिद्धत्वादिति। अतएव व्यजनादिना वह्निप्रज्वलनदशायां फूत्कार एव गृहीतशक्तिकस्य न पचतीति प्रयोगः यागइच्छाज्ञानं वेति विप्रतिपत्तिस्तु स्वीयमेधानुसारादेवेति भावः।नचनानेति। नानाधर्म्मा वच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्म्मवत्त्वं नानार्थत्वम्।तच्च पच्यादावक्षतमिति भावः। फलांशमादाय तत्त्वम् तु आशङ्कितुरपीष्टमेवेति बोध्यम्। बुद्धिविशेषादेरिति। स्वनिरूपितविषयतावच्छेदकत्वसम्बन्धेनेति शेषः बुद्धिविशेषविषयतावच्छेदकत्वस्येति यावत्। अयंभावः। तदादिभ्यश्चैत्रादितत्तद्रूपेणबोधः सर्वानुभवसिद्धः स च चैत्रत्वाद्यनुगमकधर्म्मं विनाऽनुपपन्न इति बुद्धिविशेषविषयतावच्छेदकत्वं तदनुगमक धर्म्ममङ्गीकृत्य तदनुगतीकृतदवच्छिन्नेषु चैत्रादिषु तदादीनां शक्तिः बुद्धि विशेषविषयतावच्छेदकत्वस्योपलक्षणत्वोपगमाच्च न चैत्रत्वादीनां तेन रूपेण शाब्दबोधे भानापत्तिरनुगतनानाधर्माऽवच्छिन्नशक्ति निरूपकतावच्छेदकैकधर्म्मवत्त्वस्यैवनानार्थत्वम् न तेषां तदपीति तदादिशक्तिनिरूपणे निर्णीतमन्यत्र तद्वदिहाप्यवसेयमिति। ननु पूर्वापरीभूतक्षणनश्वरक्रमिकव्यापाराणां मेलनाऽसम्भवात्तदात्मकक्रियाया अनैक्यादेका च क्रियेति प्रशंसायामिति सूत्रस्यभाष्याऽसङ्गतिरत आह। आख्यातेति। निर्विभक्तिकः पाठः साधुः आख्यातप्रतिपाद्यक्रियैकत्वव्यवस्थापीत्यर्थः।सविभक्तिकपाठे सप्तमी वैषयिकाधारे

पि अवच्छेदकबुद्धिविशेषैक्यमादायैव । उक्तं च वाक्यपदीये । गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्धया प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यतइति ॥

धात्वर्थं निरूप्य तिङर्थमाह (आश्रयेत्विति) । फलाश्रये व्यापाराश्रये चेत्यर्थः । फलाश्रयं कर्म्म व्यापाराश्रयः कर्त्ता । तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिरन्यलभ्यत्वात् । शक्यताव-

ऽध्याहृतस्थानक्रियामादाय बोध्या। बुद्धिविशेषैक्यमिति । समूहरूपबुद्धिविशेषात्मकावच्छेदकैक्यमादायेत्यर्थः। तथाचाऽवयवाऽऽश्रयंपौर्वापर्य्यम् समुदायाऽऽश्रयमेकत्वमादाय तत्सङ्गतिरिति भावः।तत्र मानमुपन्यस्यति। उक्तञ्चेति। गुणेति। क्रमिकैतद्व्यापारसमूहं प्रति गुणभूतैस्तत्तद्रूपेण भासमानैरवयवैरुपलक्षितः सङ्कलनात्मकैकत्वबुद्ध्या प्रकल्पिताऽभेदरूपः समूहः क्रियेति व्यवह्रियत इति कारिकार्थः। तत्र क्षणनश्वराणां वस्तुभूतसमुदायाऽभावाद्बुध्येत्युक्तम्। निरूप्येत्यस्य संक्षेपेणेत्यादि। प्रधानीभूतप्रत्यर्थनिरूपणानन्तरं विशेषणप्रत्ययार्थस्याऽवश्यवक्तव्यतयाऽवसरसङ्गत्या तन्निरूपणमित्यभिप्रेत्याह। तिङर्थमिति। अन्यलभ्यत्वादिति। अनन्यलभ्योहिशब्दार्थ इति न्यायादिति भावः। एतेन कृतिमतोव्यापारवतो वा कर्तुः शक्यत्वेऽनेककृतिव्यापाराणां शक्यताऽवच्छेदकत्वकल्पने गौरवमिति नैयायिकाद्युक्तं दूषणमस्मन्मताऽज्ञानविजृम्भितमिति सूचितम्। नन्वाश्रयस्य तिङर्थत्वे आश्रयत्वं शक्यतावच्छेदकं वाच्यम् तस्य च स्वरूपाऽभिन्नतया नानासम्बन्धाऽवच्छिन्नतया च नानात्वादननुगमोऽतआह। शक्यतावच्छेदकं चेति। वक्ष्यत इति। अस्य द्वितीयार्थनिरूपणाऽवसरइतिशेषः।

च्छेदकं चाश्रयत्वम् तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते। नन्वनयोराख्याताऽर्थत्वे किं मानम् प्रतीतेर्लक्षणया, आक्षेपात् प्रथमान्तपदाद्वा संभवादिति चेत् अत्रोच्यते।

"लः कर्म्मणि च भावे चाऽकर्म्मकेभ्यइति"।

तथाचतत्राऽखण्डोपाधिरूपस्याऽनुगतस्य वक्ष्यमाणत्वान्नतन्नानात्वप्रयुक्तो दोष इति भावः। मीमांसकमतं निराकरिष्यन् कर्तृकर्मणोरुक्तलिङर्थत्वंव्यवस्थापयितुं प्रक्रमते। नन्विति। ननु यद्यद्बोधकन्तत्तदर्थकमितिनियमादाख्यातजन्यकर्त्तृकर्मप्रतीतिरेव मानमत आह। प्रतीतेरिति। सम्भवादित्यनेनान्वितं सम्भवहेतु माह।लक्षणयेति।नन्वाख्यातस्याऽऽश्रयलक्षकत्वे भावनाभानाऽनुपपत्तिस्तदुपपत्तये तत्र तस्य शक्तिकल्पने नाश्रये लक्षणासंभवो युगपद्वृत्तिद्वयविरोधात् भावनाश्रयत्वेन भावनाश्रये लक्षणायां तु भावनायाः प्राधान्याऽनुपपत्तिरत आह। आक्षेपादिति। आक्षेपोऽनुपपत्तिस्तत इत्यर्थः। तथाहि अन्विताऽभिधानवादिमते पदानां विशेषणत्वे नैवाऽर्थोपस्थापकतयाऽऽख्यातार्थभावनाया विशेषणता ऽनुपपत्त्या तस्या आश्रयाऽऽक्षेपकत्वम्। यद्वाऽनुमानं सः तत्प्रयोगस्थाऽऽख्यातपदबोध्या भावना किंचिदाश्रिता विशेषणत्वेन गृहीतशक्तिकत्वाद्घटपदबोध्यघटत्ववत् इति। समानसंवित् संवेद्यत्वं तु नाऽऽक्षेपः प्रमेयमित्याश्रयभाने भावनाया अभानात् भावनापदजन्य भावनाबोधे आश्रयाभानाच्चेति। ननु व्याप्त्यादिप्रतिसंधानं विनाप्याश्रयबोधस्यानुभवसिद्धत्वान्नाक्षेपादाश्रयभानोपपत्तिः क्वाचित्कत्वात्तथाभानस्य। किंचोक्तरीत्या तज्ज्ञानसमर्थने आख्यातजन्यबोधे भावनायाः प्राधान्या ऽनुपपत्तिः प्रसक्तिपद्दे तस्या विशेषणत्वेनैवोपस्थितत्वात् घटत्ववदेतत्तत्त्वस्य विचा-

सूत्रमेव मानम्। अत्र हि चकारात् "कर्त्तरि कृदिति" सूत्रोक्तं कर्त्तरीत्यनुकृष्यते बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्मणि कर्त्तरि चानेन विधीयन्ते नकारविसर्गादिनिष्ठां कर्मकरणादिबोधकताशक्तिमादाय शसादिविधानवत्। नच सूत्रे कर्तृकर्मपदे कर्तृत्व

राऽसङ्गत्वाच्चेत्यत आह। प्रथमाऽन्तपदादिति। समभिव्याहृतप्रथमाऽन्तचैत्रादिपदादेवाश्रयप्रतीतेरुपपत्तेरित्यर्थः। एवं च नाऽऽश्रयप्रतीत्यनुपपत्तिः आश्रये आख्यातशक्तिसाधिकेति भावः। मानमिति। यद्यप्याश्रयत्वेनाश्रयभानार्थं तत्राख्यातस्य शक्तिरावश्यकीत्येवोत्तरं वक्तुमुचितम् तथापि धातोः फलव्यापारयोः शक्तिराख्यातस्याश्रयत्वे शक्तिरिति मते आश्रयत्वेनापि लाभान्नसामानयत आश्रये स्वाभिमताख्यातशक्तिः सिध्यतीति तन्मतनिरासार्थमपि सूत्रमेव प्रमाणत्वेनोपन्यस्तमिति बोध्यम्। ननु कर्तृपदाघटितमिदं सूत्रं कथमाख्यातस्य कर्तृवाचकत्वे मानमित्याशङ्कां निरस्यति। अत्र हीति। नन्वेतत्सूत्रं लकाराणामेव कर्त्रादिशक्तिबोधकम् नाख्यातस्येत्यत आह। बोधकतारूपामिति। बोधजनकत्वरूपामित्यर्थः। इदं चादेशिष्वेव शक्तिरादेशानामादेशिस्मृतिद्वारार्थोपस्थापकत्वमिति मतनिरासयितुमुक्तम् यथा चैतत्तथा वक्ष्यते। विधीयन्त इति। तथा च वर्णस्फोटपक्षे श्रूयमाणवर्णानामेव वाचकतया व्यवस्थापयिष्यमाणतया लः कर्मणीत्यादिसूत्राणां तिबादिशक्तिग्राहक एव तात्पर्याऽवधारणेन संभवति तस्याऽऽख्यातशक्तिसाधकप्रमाणत्वमिति भावः। कर्तृकर्मपदे इत्यस्य नुद्व्योपात्ते इत्यादिः। कर्तृत्वकर्मत्वपरे इति। आकृतिशक्तिवादमभिप्रेत्य भावप्रधाननिर्देशादिति भावः। कर्तृत्वं च कृतिरिति। कृञो यत्नवाचकत्वेन

कर्मत्वपरे तथाच कर्त्तृत्वं कृतिःकर्म्मत्वञ्च फलमेवाथोऽस्त्विति शङ्क्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात् । अथ दर्शनान्तरीयरीत्याव्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्तर्हि कृतामपि कर्तृकर्म्मादिवाचित्वं न सिध्येत् । "कर्त्तरि कृदिति" च, "लः कर्म्मणि" त्यनेन तुल्ययोगक्षेमम् ।

तथाकृतिककर्त्रर्थकतृजन्तकर्तृशब्दस्य कृतया श्रयवाचकतया तदुत्तरभावप्रत्ययेन प्रकृत्यर्थप्रकारीभूतधर्मबोधनादिति भावः । कर्मत्वंचफलमिति । कर्मशब्दस्य धात्वर्थफलाऽऽश्रये पारिभाषिकत्वादिति भावः । शङ्क्यमिति । तथाच तत्सूत्रबलात्र कर्तृकर्मणोराख्यातशक्तिः सिध्यतीति भावः । दर्शनं शास्त्रं न्यायादेरन्यद्दर्शनान्तरं तत्रभवा दर्शनान्तरीया गङ्गादिराचक्षः फलं धात्वर्थः करोतिश्च व्यापारवचन इति मीमांसका-मन्यन्ते तन्मते व्यापारस्यानन्यलभ्यत्वाभावात्तत्र लकारविधौ न किंचिद्बाधकम् । यद्यप्युक्तरीत्या व्यापारे शक्तिसिद्धावपि फलशक्तिबोधकं कर्मणीत्यनुपपन्नमेव तथाप्यभिधानाऽनभिधानावस्थार्थं तदप्यावश्यकमेव इ धाभानं न कथंचित्परिहरणीयमिति भावः । कृतामिति । कृत्संज्ञकानां ण्वुल्तृजादीनामित्यर्थः । ननु कर्त्तरि कृदित्येव तत्र शक्तिसाधकमत आह । कर्तरिकृदितिचेति । तदेव च कर्तरीत्यत्रानुवर्त्तते । तथाच पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेनाप्यनुवर्त्त्यस्य तस्य धर्मिपरत्वमत्र धर्मपरतायां तु तत्रापिधर्मपरतैवस्या त्तदेवाह । तुल्ययोगक्षेममिति । अलब्धलाभोयोगो लब्धरक्षणं क्षेममेवंच लःकर्मणीत्यस्यानन्यलब्धभावनाया आख्यातार्थत्वप्रतिपादकत्वोपगमे न्यायसाम्यात्कर्त्तरिकृदित्यस्यापि कृतांभावनार्थत्वप्रतिपादकत्वन्तस्या आक्षेपादेव लाभात्र कृतां तच्छक्तिप्रतिपादकं तदिति यदि तत्तर्हि लःकर्मणीत्यपि नाख्यातस्य भावनाशक्तिप्रतिपादकमिति समानमित्यर्थः ॥

अपि च मीमांसकानां कृतामिवाऽऽख्यातानामपि कर्तृवाचित्वमस्तु भावनाया एवाऽऽक्षेपेण कृदादिवत्प्रतीतिसंभवे वाच्यत्वं मास्तु। तथा सति प्राधान्यं तस्या न स्यादितिचेन्न। घटमानयेत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः। पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेन्न। पाकाऽनु-

ननु पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेऽप्यनुवृत्तस्य तस्य शब्दाऽधिकाराऽऽश्रयणेन धर्मपरत्वसंभवान्नोक्तदोषः।यदि च शब्दाऽधिकाराऽऽश्रयणं सत्येव गमके प्रकृते च तदाश्रयणे प्रमाणाऽभाव इति विभाव्यते तदाऽपि शक्तिः कारकं शक्तिमत्कारकमिति पक्षद्वयस्याऽऽप्याकरसिद्धतया तद्विकल्पस्य तिङ्कृतोर्व्यवस्थितत्वाऽऽश्रयणादर्थाऽधिकाराऽऽश्रयणेऽप्यभिमतार्थलाभोऽस्त एवेत्यत आह। अपिचेति। तथाच विकल्पव्यवस्थाया एवाऽप्रामाणिकत्वेनैकाऽर्थपरतैव न्याय्येति भावः। नन्वाऽऽख्यातस्य व्यापाराऽवाचकत्वे कथं ततस्तद्बोधोऽत आह। भावनाया इति। कृदादिवदिति। तत्रतस्येति क्तिः कृदादिस्थल इवेत्यर्थः।आदिपदात्कर्तृविहिततद्धितादेः परिग्रहः। तथाच यथा भवन्मते धातोर्व्यापाराऽवाचकत्वेन कृदर्थकर्त्राऽऽक्षिप्तभावनाया बोधविषयत्वं तथाऽऽख्यातेऽपीति भावः। तथासतीति। भावनाया आख्याताऽवाच्यत्वे सतीत्यर्थः।तस्या भावनायाः प्राधान्यं मुख्यविशेष्यत्वम्। घटमानयेति जातिः पदार्थ इति मते जात्याऽऽक्षिप्तव्यक्तेर्यथा प्राधान्यं तथा कर्त्राऽऽक्षिप्तभावनाया अपि प्राधान्यमुपपत्स्यत इत्यर्थः। शक्तिग्राहकेषु परिगणिताद्विवरणाद्भावनावाचकत्वमाख्यातस्याऽऽयास्यतीत्याशङ्कते।भावनाया इति। विवरणेति। तत्समानाऽर्थकपदाऽन्तरेण तदर्थकथनस्य विवरणतया प्रकृते पचतीत्यस्य पाकभावनेत्याख्यातस्य भावनापदेन विवरणात्तस्य भावनावाचकत्वमित्यर्थः। विवरणस्य स्वस्वबोधा-

कूलव्यापारवतः कर्त्तुरपि विवरणविषयत्वाऽविशेषात्। नच कर्त्तृविवरणं तात्पर्य्यार्थविवरणं पाकं करोतीत्य-शब्दाऽर्थकर्म्मत्वविवरणवत् इतरेतरयोगद्वन्द्वे समुच्चयांशविवरणवद्वा न तदर्थनिर्णायकमिति वाच्यम्। भावनायामपि तुल्यत्वात्। किंच पचति देवदत्त इत्य-

नुसारिता न तेनाऽर्थनिर्णय इत्याह। पाकाऽनुकूलेति। पचतीत्यत्रैककर्त्तृका पचिक्रियेति कर्त्तृविवरणस्याऽपि दर्शनेनाऽऽख्यातस्य भावनायां शक्तिः उत कर्त्तरीत्यत्र विनिगमकाऽभावादिति भावः। इतरेतरयोगद्वन्द्व इति। समाहारद्वन्द्व उत्तरपदलभ्याऽर्थसमाहारस्य च शब्देन विवरणादुक्तमितरेतरेति धवखदिरावित्यादिद्वन्द्वघटकपदाऽशक्यसाहित्यस्य विग्रहवाक्यस्थचशब्देन विवरणवदित्यर्थः। इदं चाऽन्वयप्रयोजकरूपवत्त्वं योग्यता। एवंच घटेन जलमाहरेत्यत्र जलाऽऽहरणप्रयोजकतया छिद्रेतरत्ववत्प्रकृते द्वित्वाऽन्वयप्रयोजकतयाऽपदाऽर्थसाहित्यस्याऽपि भानमित्यभ्युपेत्योक्तम्। तत्र साहित्यस्य द्वित्वाऽऽद्यतिरिक्तस्याऽननुभवात्तस्य द्विवचनादिनैवोपस्थितेर्न तत्र समासघटकप्रत्येकपदवृत्तिस्तस्यैव चेन विवरणमिति मताऽन्तरन्तु वक्ष्यते। तुल्यत्वादिति। भावनापदेनाऽऽख्यातस्य विवरणमप्यपदार्थविवरणमित्यस्यापि वक्तुं शक्यत्वादित्यर्थः। स्वस्वबोधाऽनुसारिविवरणस्य नाऽर्थनिर्णायकत्वमित्युभयोः समानमिति भावः। नन्वाख्यातस्य कर्त्तृवाचित्वे तदाक्षिप्तभावनायाः प्राधान्याऽनुपपत्तिः। न चाऽऽकृतिवादे जात्याक्षिप्तव्यक्तिवत्प्राधान्यमुपपादितमेवेति वाच्यम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। तथाहि कर्त्ता स्वस्वरूपनिरूपकतया भावनाऽऽक्षेप्त्री भावनाविरहिणः कर्त्तृत्वाऽसंभवात्। ततश्च धर्मिग्राहकमानसिद्धगुणत्वेन प्राधान्याऽसंभवः कर्त्तरीव जात्या तु परिच्छेद्यतयाऽवगतस्य द्रव्यस्य तथैवाऽऽक्षेपाद्भवति तस्य प्राधान्येन भा-

**त्राऽभेदाऽन्वयदर्शनात् तदनुरोधेन कर्त्तुर्वाच्यत्वमा-
वश्यकं पक्ता देवदत्तइतिवत्। न चाऽभेदबोधे समा
नविभक्तिकत्वं नियामकम् तच्च तत्र नास्तीति**

नमिति प्राधान्याऽनुरोधाद्भावनाया वाच्यत्वमावश्यकमित्यतो दूष-
णाऽन्तरमाह।किंचेति। अभेदाऽन्वयदर्शनादिति। देवदत्ताऽभिन्नैककर्तृको
वर्त्तमानो व्यापार इत्याकारकबोधस्याऽऽकरसंमतत्वादित्यर्थः। तदनु-
रोधेनेति। अभेदाऽन्वयाऽनुरोधेनेत्यर्थः।आवश्यकमिति।अन्यथा ऽनुभूयमा-
नताद्दृशबोधाऽपलापाऽऽपत्तिरिति भावः॥नियामकमिति॥ तद्विभक्त्यन्तना-
मार्थनिष्ठाऽभेदसंसर्गाऽवच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्द-
बुद्धिं प्रति तद्विभक्त्यन्तपदजन्योपस्थितेर्हेतुत्वस्य नीलो घट इत्यादौ
क्लृप्तत्वादित्यर्थः। तच्चेति । अभेदान्वयबोधप्रयोजकसमानविभक्तिकत्वं
चेत्यर्थः। अत्र देवदत्तः पचतीत्यादौ ताद्दृशनियमे व्यतिरेकव्यभिचा-
रस्थानि दर्शयति। सोमेनेत्यादिना।नन्वत्र यागे सोमस्य करणत्वेनैवा-
न्वयात्कथमुक्तनियमस्य व्यभिचार इति चेन्न। सोमस्य यागभावना-
यां करणत्वेनाऽन्वये यागस्याऽपि तत्र करणत्वेनैवा ऽन्वयात्सोमेन यागे-
नेष्टं भावयेदित्युभयविधाने वाक्यभेदप्रसङ्गः सोमस्य यागवत्फलभा-
वनाकरणत्वेन प्राधान्यापत्तिर्यागार्थत्वानुपपत्तिः प्रत्ययवाच्यफलभाव-
नायाः समानपदोपात्तयागेनैव करणाऽऽकाङ्क्षानिवृत्तेर्विभिन्नपदोपात्तस्य
सोमस्य करणत्वेना ऽन्वयानुपपत्तिश्च सोमेन यागमित्यन्वयाभ्युपगमे
यद्यपि सोमस्य न यागार्थत्वानुपपत्तिः करणत्वेनैवान्वयात् तथापि प्र-
त्ययार्थभावनाकरणत्वेनोपस्थितस्य साध्यत्वेनाऽन्वयानुपपत्तिर्दुर्वा-
रैवेति सोमपदस्य मत्वर्थलक्षणया सोमवता यागेनेष्टं भावयेदिति
विशिष्टार्थविधानाद्वाक्यभेदप्रसङ्गो नेति मीमांसकसिद्धान्तस्तत्र चो-
क्तनियमे व्यभिचारो दुर्वार इति भावः। स्तोकं पचतीति। अत्रापि धात्व-
र्थव्यापारजन्यफलसम्बन्धिनि फले विभिन्नविभक्तिकस्तोकपदार्थस्या भेदा-

वाच्यम्। सोमेन यजेत स्तोकं, पचति, राजपुरुषइत्यादावप्यभेदबोधाऽनापत्तेः। नच लक्षणया कर्त्तुरुक्तत्वात् सामानाधिकरण्यम्" पिंगाक्ष्यादियौगिकानामपि द्रव्यवाचित्वाऽनापत्तेः। एवं वैश्वदेवीत्यादितद्धितानामपि। "अनेकमन्यपदार्थे" "सास्य देवता" इत्यनुशासनेन पिङ्गे अक्षिणी यस्याः, विश्वे देवा देवता अस्या इति विग्रहदर्शनात्प्रधानषष्ठ्यर्थे एव अनुशासनलाभात्।

न्वयादित्यर्थः। ननु समानविभक्तिकत्वम् नामाऽर्थयोरेवाऽभेदाऽन्वयबोधे प्रयोजकमत एव व्युत्पत्तौ द्विवचनस्यैवोल्लेखः। नामत्वं च वक्ष्यते प्रकृते चाऽनुयोगिप्रतियोगिनोर्नामार्थत्वाभावान्नोक्तदोषोऽत आह। राजपुरुषइति। यद्यपि सोमेन यजेतेत्यत्रैव देवदत्तः पचतीत्यत्राऽपि समानविभक्तिकत्वस्याऽतन्त्रतयाऽभिमतबोधान्वयानुरोधात्कर्त्तृवाचित्वम् सिद्धमेव तथापि व्युत्पत्तेर्नामाऽर्थद्वयविषयकत्वेऽपि व्यभिचारो दुरुद्धर एवेत्याशयेन नामार्थद्वयस्थलमुपात्तं नैयायिकमतेन चेदं तैः कर्मधारये षष्ठीतत्पुरुषे च पूर्वपदशक्यलक्ष्यान्यतरस्योत्तरपदार्थेऽभेदान्वयोपगमात्। स्वमते तु जहत्स्वार्थवृत्त्यभ्युपगमेन पूर्वोत्तरपदार्थयोरन्वयस्यैवाऽभावेनोक्तव्युत्पत्तेरप्रसरादिति बोध्यम्। इद मुपलक्षणं षष्ठ्यर्थबहुव्रीहेरपि। अपरे तु उक्तव्युत्पत्तौ नामांशेसमस्तत्वस्यापि विशेषणान्नोक्तस्थले व्यभिचार इत्याहुः। अधिकमग्रे वक्ष्यते। सामानाधिकरण्यमिति। पदयोरेकार्थाऽभिधायित्वमित्यर्थः। यौगिकानामिति। योगोऽवयववृत्तिस्तन्मात्रपुरस्कारेण प्रवृत्तानामित्यर्थः। द्रव्यवाचित्वाऽनापत्तेरिति। धर्मिपरत्वाऽनापत्तेरित्यर्थः। एवमिति। लक्षणयैव सामानाधिकरण्योपपादने इत्यर्थः। इत्थमेवेति।

वैश्वदेवी इत्यादीति। द्रव्यवाचित्त्वाऽनापत्तेरित्यनुषज्यते। तथाच बलाऽबलाऽधिकरणोच्छेदाऽऽपत्तिरिति भावः। तथाहि तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिभ्यो वाजिनमिति श्रूयते। अत्रायं संशयः। किं अनया श्रुत्याऽऽमिक्षावाजिनोभयगुणकमेकम् कर्म विधीयतेऽथवा तद्गुणदेवताभिन्नं कर्मद्वयमिति। वाजेनाऽन्नेनाऽऽमिक्षारूपेण सम्बन्धाद्वाजिनो विश्वेदेवास्ताननूद्य वाजिनगुणो विधीयते तेनोभयगुणकं वैश्वदेवमेकं कर्मेति पूर्वपक्षे वैश्वदेव्यामिक्षेत्यत्र तद्धितस्य देवतासम्बन्ध्यर्थकतया श्रौतः सम्बन्धो वाजिभ्यो वाजिनमित्यत्र तु वाक्ये न सः सत्यामपि पदान्तरापेक्षायां स्वाभिन्नार्थकपदस्यैवापेक्षणान्नश्रौतत्त्वबाधः सम्बन्धस्य यत्र तु भिन्नार्थकपदापेक्षा तत्रैव वाक्यस्य विनियोजकत्वात्। एवं च वैश्वदेव्यामिक्षेत्येतद्विहितवैश्वदेवयागानुवादेन न वाजिनगुणविधानम् श्रौतद्रव्येण निराकाङ्क्षत्वात्। किन्तु कर्मान्तरविधिर्वाजिभ्य इति चापूर्वदेवताविधानमिति राद्धान्तः। यदि च तद्धितस्य देवतासम्बन्ध एव शक्तिस्तदा वाजिनाऽऽमिक्षयो वाक्यविनियोज्यस्य साम्यादामिक्षाद्रव्येण देवतासम्बन्धस्य श्रौतत्वमिति सिद्धान्तव्याकोपः। लक्षितद्रव्यमादाय देवतासम्बन्धे श्रौतत्वसम्बन्धात्तदनुपपत्त्यभावेन तद्धितस्य द्रव्यार्थकत्वकल्पनमत्ययुक्तम् स्यादिति। अनुशासनलाभादिति। उपलक्षणमिदम् युक्तेरपि। तथाहि घटपदात् घटप्रकारकबोधवद्दण्डादिपदाद्दण्डसम्बन्धवानिति प्रतीतिः सर्वसिद्धा। तत्राऽऽकृत्यधिकरणन्यायेन सम्बन्धमात्रम् मतुबादिवाच्यं स्यादत एव देवदत्तस्य गोमत्त्वमित्यत्र त्वप्रत्ययस्य सम्बन्धबोधकत्वं सङ्गच्छते। घटत्वमित्यादौ प्रकृत्यर्थघटत्वबोधकत्ववत् प्रकृतिजन्यबोधप्रकारस्य भावप्रत्ययार्थत्वाद्विशेषस्य संसर्गस्य कथम् ततो बोध इति तु नाऽऽशङ्कनीयम् यतस्तस्य स्वाश्रयत्वांशे प्रकारतयैव भानात्। एवम् मत्वर्थविहितबहुव्रीहेरप्येकं द्वायनमस्या इति विग्रहे देवतार्थकतद्धितस्यापि विश्वेदेवा देवता

भस्या इति विग्रहे च प्रत्ययार्थसम्बन्धस्यैव प्राधान्यदर्शनात्तस्यैव वृत्तिवाच्यत्वनिर्णयः। उक्तं च। यस्मिन्नन्यपदार्थे च बहुव्रीहिर्विधीयते। तस्यापि प्रत्ययार्थत्वात् सम्बन्धस्य प्रधानतेति। न च गोमानित्यादौ सम्बन्धिप्रतीत्यनुपपत्तिः। उभयाऽऽश्रितेन सम्बन्धेनाऽऽक्षेपात्तदुपपत्तेः। तव कर्तृवत्सम्बन्धस्यैव च। न चाऽसत्त्वभूतसम्बन्धस्यैव विभक्त्यर्थतया तद्विहितमतुबादेस्तादृशसम्बन्धबोधकत्वेन तत्र लिङ्गसङ्ख्याऽनन्वयाऽऽपत्त्या सत्त्वभूतसम्बन्ध एवाऽनुशासनाऽऽदरेण शक्तिरभ्युपेया। एवं च द्रव्यमेवार्थो मत्वर्थीयस्याऽस्तु सम्बन्ध आक्षेपलभ्य एव किं न स्यात्। किञ्च मतुबादेः सम्बन्धसाम्यार्थकत्वे तस्य सम्बन्धादिपदपर्यायताऽऽपत्त्या सम्बन्धविशिष्टकत्वमेवोररीकरणीयम्। तत्त्वम् चाऽनुयोगि प्रतियोगिविशिष्यनिरूप्यत्वम्। तथाच कस्य निरूपकस्य प्रकृत्या लाभेऽप्यनुयोगिरूपनिरूपकभानार्थम् तत्र शक्तिकल्पनेत्वतीव गौरवमिति वाच्यम्। मतुबादेर्ह्यऽसत्त्वभूतसम्बन्ध एव वाच्योऽत एव सम्बन्धानामनेकत्वेऽलिङ्गकत्वेऽपि च दण्डादिशब्दानामेकवचनान्तत्वं नानालिङ्गकत्वं च सम्बन्धिनां तथात्व एव तादृशप्रयोगदर्शनात्। तथाच मतुबर्थसम्बन्धे लिङ्गाद्यन्वयासम्भवात्तैरेवाक्षेपः सम्बन्धिनः। आख्यातार्थसङ्ख्ययेव कर्त्रादेः। वस्तुतस्तु लिङ्गसङ्ख्यानन्वयित्वरूपासत्त्वभूतत्वमपि षष्ठ्यर्थादावर्थसिद्धम्। प्रत्ययार्थलिङ्गसङ्ख्यादेः प्रत्ययार्थ एवा न्वयायोगात् प्रत्ययार्थमिति व्युत्पत्तेश्च तस्मान्नासत्वभूतसम्बन्धः षष्ठीवाच्यः। यत्तु अनुयोगिरूपनिरूपकभानार्थम् द्रव्ये शक्तिकल्पने गौरवमिति तदपि न। सम्बन्धप्रत्यये हि यावदाश्रयभानापेक्षा न शाब्दे येन तच्छक्तिकल्पनागौरवं सम्भाव्येत तस्मात्तत्र मतुबादेः शक्तौ न किञ्चिद्बाधकमिति प्रपञ्चितम् चैतदधिकमन्यत्र। एवं चैकहायन्यादिपदानां सम्बन्धवाचकतायामनुशासनस्य तदुपष्टम्भानेकयुक्तीनां च सत्त्वात्तत्रैव शक्तिः सिध्येन्न सम्बन्धिनीत्याखण्डलार्थः तथाचेति। सामानाधिकरण्यस्य लक्षणयैवोपपादनमित्यर्थः॥

तथा च "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाती
ति" वाक्ये द्रव्याऽनुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्य
एवाऽन्वयप्रतिपादकाऽरुणाऽधिकरणोच्छेदाऽऽपत्तिः।
द्रव्यवाचकत्वसाधकमूलयुक्तेः, सामानाधिकरण्य
स्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण बृहद्वैया-

करणाधिकरणेति। तथा हि अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति इति श्रूयते तत्र किमरुणिमावाक्यम् भङ्क्त्वा प्रकारे निवेशनीयः किं वा क्रीणातिना सम्बध्यते इति संशये क्रीणातिना सम्बध्यमानस्त्व योगात् क्रयणकरणं सत्त्वारुणिमामूर्त्तस्य तद्युक्तमिति नास्य क्रयणसम्बन्ध इति पृथगेव प्रकरणे निवेशनीय इति पूर्वपक्षः। सिद्धान्तस्तु सम्भवति सन्निहितपदार्थान्वये प्रकरणनिवेशानौचित्यात्। पिङ्गाक्ष्यादि पदानां द्रव्यवचनतया तस्मिन्नन्वयसौलभ्येन तद्द्वारा क्रीणात्यर्थेनाऽपि समन्वयलाभाद्वाक्यघटकत्वमेव तस्येति स चाऽनुपपन्नः पिङ्गाक्ष्यादियौगिकानां पदानामुक्तयुक्त्या सम्बन्धार्थकतया द्रव्यस्य तैरनुपादानात्। किंच पूर्वपक्षोऽप्यनुपपन्नः पिंगाक्ष्यैकहायनीशब्दार्थसम्बन्धस्याप्यमूर्त्तत्वात् क्रीणातिकरणत्वाऽसम्भवेन क्रीणातिकरणत्वस्य तद्वाक्यादलाभादरुणस्येव वाक्यभेदशङ्कायां मूलशैथिल्याच्च बहुव्रीह्योररुणपदस्य च लाक्षणिकद्रव्यविधायकतया अविशिष्टत्वेन बहुव्रीह्यादेरेव द्रव्यविधायकत्वम् नारुणपदस्येत्यत्र विनिगमकाभावात्। अधिकमग्रे वक्ष्यते। उक्तरीत्येति। सम्बन्धिलक्षणाकल्पनेनेत्यर्थः। प्रपञ्चितमिति। प्रपञ्चस्तूक्तप्रायः भूषणे इति। प्रकृतस्थले समासशक्तिनिरूपणाऽवसरे चेत्यर्थः। पदाऽर्थं निरूप्येत्यनेन पदार्थनिरूपणानन्तरम् वाक्यार्थनिरूपणे तयोः सङ्गतिः सूच्यते। तत्फलं तु पूर्वापरग्रन्थैकवाक्यप्रतिपत्तिरेकप्रयोजनवताज्ञानफलिका। केचित्तु उन्मत्तप्रलपितत्वशङ्कानिदानासङ्गतत्वज्ञाननिरासः

करणभूषणे (लिङः) इति बोधकतारूपा शक्तिस्लिङ्क्त्वे वेत्यभिप्रेत्येदम्। पदार्थं निरूप्य वाक्यार्थं निरूपयति (फले) इत्यादि। त्रिङित्यादि फलं प्रति (तिङर्थः) कर्त्तृकर्म्मसङ्ख्याकालाः। तत्र कर्त्तृकर्म्मणी फलव्यापारयोर्व्विशेषणे।

प्रयोजनमित्याहुः। सा चाऽनन्तर्य्याऽभिधानप्रयोजकजिज्ञासाजनकतावच्छेदकधर्म्मरूपा षड्विधा। तदुक्तम्। सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा। निर्वाहकैककार्य्यत्वषोढा सङ्गतिरिष्यते इति। तत्र प्रकृतसिद्ध्यनुकूलचिन्ता कालावच्छिन्नप्रकृतानुकूलत्वमुपोद्घातः। अनुकूलत्वम् चात्र घटकत्वज्ञापकत्वादिरूपम् यथायथम् ग्राह्यम् तत्रावच्छेदकांशः स्वरूपसन्नितरांशस्य ज्ञान उपयोगी। एवमग्रेपि। स्मृतिकालावच्छिन्नोपेक्षानर्हतावच्छेदकधर्म्मवत्त्वम् प्रसङ्गः। हेतुता प्रसिद्धा। प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालावच्छिन्नावश्यवक्तव्यत्वमवसरः। निर्वाहकत्वमेककार्य्यजनकत्वम् कारणतदवच्छेदकसाधारणप्रयोजकत्वरूपम् एककार्य्यत्वमेकस्य कार्य्यता सा च जन्यता जन्यज्ञानविषयत्वरूपा चेति। उदाहरणानि कानिचित्त्वत्रैव वक्ष्यन्तेऽन्यानि तु स्वयमूह्यानि। आक्षेपोदाहरणादीनां तु तन्त्रान्तरे सङ्गतित्वेन प्रसिद्धानामेष्वेवान्तर्भाव इति न तेषामाधिक्यसम्भावना प्रकृते च पदार्थतत्संसर्गविशेषरूपवाक्यार्थयोः प्रसङ्गसङ्गतिः। तथाहि निरूपितेषु पदार्थेषु प्रायशोऽसंसृष्टपदार्थोऽभावेन तत्संसर्गस्य सामान्यरूपेण स्मरणम्। ततः सामान्यधर्म्मप्रकारकज्ञानस्य विशेषधर्म्मप्रकारकजिज्ञासाजनकत्वाच्छिष्यस्य क एषां संसर्ग इत्याकारा विशेषधर्म्मजिज्ञासा ततस्तद्बोधनाय शिष्यस्य शब्दप्रयोगस्ततः शिष्यजिज्ञासाज्ञानं गुरोः ततो जिज्ञासाविषयज्ञानेष्टसाधनताज्ञानात्कण्ठताल्वाद्यभिघातादिसम्पादनेन गुरोः शिष्यजिज्ञासानिवृत्तिफलकम् विशेषसंसर्गरूपवाक्यार्थाभिधानमिति। संसर्गगतसामान्यस्योपेक्षाऽनर्हतावच्छेदकत्वात्तद्वत्त्वस्य तत्र सत्त्वात्प्रसङ्गसङ्गतिः। इत्थमन्यत्राऽपि लक्षणानि योज्यानि। विशेषणे इति। आधाराऽऽधेयभावसम्बन्धेन प्रकारावित्यर्थः।

सङ्ख्या कर्त्तृप्रत्यये कर्त्तरि कर्मप्रत्यये कर्मणि समान प्रत्ययोपात्तत्वात्। तथा चाऽऽख्यातार्थसङ्ख्याप्रकारक बोधं प्रति आख्यातजन्यकर्त्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः नैयायिकादीनामाख्याता र्थसङ्ख्यायाः प्रथमान्तार्थ एवाऽन्वयादाख्यातार्थसङ् ख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावो वाच्यः। सोऽपि चंद्र इव मुखं दृश्यते देवदत्तो भुक्त्वा व्रजतीत्यादौ चन्द्रक्त्वार्थयोराख्यातार्थान न्वयादितराऽविशेषणत्वघटित इत्यति गौरवम्। इद-

सङ्ख्याया आख्याताऽर्थ कर्त्तृकर्माऽन्वयित्वे प्रयोजकमाह। समानप्रत्ययोपा-त्तत्वादिति। एतेन समानाऽभिधानश्रुतेर्वाक्याऽपेक्षया बलवत्त्वात्समानपदो-पात्तान्वयित्वं विहाय प्रथमाऽन्तार्थेऽन्वयोऽनुचित इति व्यज्यते एकपदज-न्योपस्थितिविषयत्वादिति तदर्थः। लडादीनां वाचकत्वकाले आख्यात-जन्योपस्थितिविषयत्वस्य कालेऽपि सत्त्वात्तत्र व्यभिचारवारणाय कर्त्तृकर्म-विषयत्वेन तां विशिनष्टि। तथा चेति। घट इत्यादावेकत्वादिसङ्ख्याप्रकारक बोधे व्यभिचारो माभूदिति कार्यतावच्छेदककोटावाख्याताऽर्थेति। तद-र्थकालप्रकारकबोधे तन्निरासाय सङ्ख्येति। स्वोक्तमाख्यातस्य कर्त्तृकर्मार्थ कत्वम् दर्शयितुं प्रसङ्गान्न्यायमतं निराकरोति। नैयायिकानामित्यादिना। अन्वयादिति। एकपदोपात्तयोरेकार्थान्वयित्वस्य न्याय्यत्वादिति भावः। आ-ख्यातार्थकालप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेरनपेक्षणादाह। स-ङ्ख्येति। इतराविशेषणत्वेति। प्रथमान्तार्थे तद्विशेषत्वघटित इत्यर्थः। तथा चेतरविशेषणताऽनापन्नार्थविषयकोपस्थितिः कारणमित्यर्थः। एवञ्च

मपि कर्तृकर्मणोराख्यातार्थत्वे मानमिति स्पष्टं भूषणे॥

चन्द्रभोजनादीनां प्रथमान्तार्थत्वेऽपीवार्थसादृश्यभजनादिविशेषणत्वान्न-व्यभिचार इति भावः। घटित इति। तदविषयकप्रतीत्यविषय इत्यर्थः। तद-वच्छिन्नावच्छेदकताककारणताग्रहविषय इति यावत्। इतराविशेषणत्वम् चेतरविशेषणत्वतात्पर्याविषयत्वम्। नातश्चैत्र इव पचतीत्यादौ खले क-पोतन्यायेन बोधे चैत्रीयं सादृश्यमित्यवान्तरबोधाऽभावेन चैत्रस्येतर-निरूपितप्रकारताशून्यत्वरूपेतराऽविशेषणत्वसत्वेऽपि क्षतिः। अविशेषणत्वेऽपि विशेषणत्वतात्पर्यविषयत्वसत्वात्। तथाचाऽऽख्यातार्थसङ्ख्याप्रका-रतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रतीतरविशेषणत्वतात्पर्याऽविषयार्थवृत्तिविशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिर्हेतुरिति पर्य-वसितोऽर्थः। चैत्रेण सुप्यते इत्यादि भावाऽऽख्यातस्थले चैत्रकर्तृकः स्वाप इत्यादिबोधाद्यथोक्तविशेषणकधात्वर्थे स्वापे तदनन्वयाद्व्यभिचार परिहाराय प्रथमान्तेति पदविशेषणम्। यद्यप्येवमपि चैत्र एव पचति न मैत्र इत्यादावन्ययोगव्यवच्छेदरूपैवकारपदार्थैकदेशेऽन्यत्वे चैत्रस्य वि-शेषणत्वात्तत्र सङ्ख्याऽन्वयाऽनुपपत्तिरिति विभाव्यते तदा प्रथमान्तार्थो विशेषणत्वमात्रतात्पर्याविषयत्वेन विशेषणीयः। अवशिष्टांऽशस्याऽपि नि-वेशे प्रयोजनाऽभावादुक्तस्थले च चैत्रस्य मुख्यविशेष्यत्वविशेषणत्वाभ्यां तात्पर्यविषयत्वान्न सङ्ख्याऽन्वयाऽनुपपत्तिरिति तन्मतनिष्कर्षः। अति गौरव-मिति। अनन्यलभ्यशक्तौ शक्तिकल्पने सङ्ख्यान्वयबोधहेतूपस्थितौ विभिन्नपद-जन्यत्वनिवेश एव गौरवम्। प्रथमान्तपदार्थस्य विशेषणत्वमात्रतात्पर्याऽ-विषयत्वेन निवेशेत्वतिगौरवमित्यर्थः। इदमपीति। उपदर्शितकार्यका-रणभावे दर्शितलाघवमपीत्यर्थः। यद्यपि तन्मते भावनान्वयिनि सङ्-ख्यान्वयनियमादाख्यातेन भावनाऽविषयकसङ्ख्यान्वयबोधस्य काप्यजन-नाद्भावनान्वयबुद्धित्वस्य सङ्ख्यान्वयबुद्धित्वव्यापकतया व्याप्यधर्मावच्छि-

न्नसामग्र्या फले जननीये व्यापकधर्मावच्छिन्नसामग्र्या अपेक्षणाद्विशेषण-त्वमात्रतात्पर्याऽविषयत्वविशेषणविशिष्टप्रथमान्तार्थोपस्थितिरूपायास्त-स्याऽभावादेवोक्तस्थले व्यभिचाराप्रसक्तेर्न तद्व्यावृत्तये सङ्ख्यान्वयकारणता-वच्छेदककोटौ उक्तविशेषणप्रवेशाऽवसरस्तथापि कृतिशक्तिवादिमते उक्त-स्थले तदापत्तिवारणाय भावनान्वयबोधकारणतावच्छेदककोटावेवोक्त-विशेषणवितरणप्रयुक्तगौरवमस्मन्मते तु प्रथमान्तपदार्थस्याख्यातार्थे वि-शेषणतयैवान्वयेन चन्द्रादेरेकत्र विशेषणतयाऽन्वितस्य नैराकाङ्क्ष्येणाऽपर-त्र विशेषणतयाऽन्वयाऽयोगादुक्तव्यभिचाराऽभावेन न तन्निवारकविशेषणो-पादानप्रयुक्तगौरवमितीदमेवाभिप्रेत्योक्तम्। इदमपीति। अधिकमन्यत्रानु-संधेयम्। अत्राहु र्नव्याः लाघवोपदर्शितोक्तयुक्तिकदम्बेनाख्यातस्य धर्म-वाचकत्वसिद्धावुत्तरकालकल्प्यतादृशकार्यकारणाऽभावप्रयुक्तगौरवं निष्प्रा-दक्षपतत्र्यधिकरणन्यायेनाकिञ्चित्करं फलमुखत्वात्। किञ्च चन्द्राद्युपमाने आख्यातार्थे सङ्ख्याद्यन्वयोपगम आवश्यकः।तत्र तदन्वयाऽनुपगमे सादृश्य प्रयोजकधर्माऽलाभेन वाक्यस्याऽपरिपुष्टार्थतापत्तेः। क्वान्तार्थे भोजनादौ तु सङ्ख्यादीनामयोग्यत्वादेवाऽनन्वयेऽनानतिप्रसङ्गादेवञ्च नास्मन्मते दोष-लेशोपीति§। कर्त्तृकर्मणोः सङ्ख्यायाश्च विशेषणतां व्यवस्थाप्य कालस्यापि तां प्रतिपादयति।कालस्त्वित्यादिना। व्यापारइति। धात्वर्थे व्यापारे इत्य-र्थः। नन्वाख्यातस्य कालशक्तिपरिच्छेदकेषु वर्तमाने लडित्यादिषु व्या-

---

§ अत्र वैयाकरणाः अन्यविभक्त्यन्तपदोपस्थितसङ्ख्याया अन्यपदार्थे-न्वयस्याऽप्रसिद्धत्वादेव भवदुक्तकार्यकारणभावकल्पनमसिद्धम्। अत एव पचतीत्यस्मादेवैककर्त्तृकपाकोपस्थितिः।अन्यथा पाकाऽनुकूला कृतिरेकत्व-मित्यनन्वितसङ्ख्याया एवोपस्थितिः स्यात् पदविशेषाऽध्याहारस्तु प्रकरण ज्ञानं विनाऽसम्भवी।अत एव कःपचतीतिकर्त्तृविशेषजिज्ञासेति तस्मादिद-मपीत्यस्य बाधकविशेषं गौरवमपीत्यर्थः॥

कालस्तु व्यापारे विशेषणम्।तथाहि वर्त्तमानेलडित्यत्राऽधिकाराद्धातोरिति लब्धं तत्र धात्वर्थं वदत्प्राधान्याद् व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः। न च सङ्ख्यावत्कर्त्तृकर्मणोरेवान्वयः शङ्क्यः। अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यनापत्तेश्च॥ नापि फले तदन्वयः फलाऽनुत्पत्तिदशायां व्यापारसत्वे पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्चेत्यवधेय-

पारवाचकपदानुपादानात्कथं कालस्य धात्वर्थव्यापारविशेषणतेत्यतस्तत्सूत्रप्रामाण्येनैव तां साधयति। तथाहीत्यादिना। तत्र धातुपदं चेत्यर्थः। धात्वर्थमिति।फलव्यापारोभयात्मकमित्यर्थः। सत्तायामित्याद्यर्थनिर्देशाभूवादिसूत्रप्रामाण्याच्चेति भावः। वदत्।बोधयत् सन् ब्राह्मण इतिवच्छता प्राधान्यात् धातुजन्यबोधे विशेष्यतया भासमानत्वादित्यर्थः। व्यापारमेवेत्येवकारेण फलव्यवच्छेदः।प्राधान्यादित्युक्त्या यन्मते कर्माऽऽख्यातेफलस्य प्राधान्यं तन्मते फल एवान्वय इति ध्वनितम्। ग्राहयतीति। आख्यातार्थकालविशेष्यतया बोधयतीत्यर्थः। गुणानां च परार्थत्वादिति न्यायात्प्रत्ययार्थस्य साक्षात्प्रकृतिजन्यबोधविशेष्याऽन्वयित्वनियमाच्चेति,भावः। कर्त्तृकर्मणोरिति। समानप्रत्ययोपात्तत्वप्रत्यासत्तेरितिभावः। पचतीत्यापत्तेरिति। कर्त्तुर्विद्यमानत्वादिति भावः। एवमग्रेपि। नापि फल इति। केचित्तु, फलव्यापारयोर्धातोः पृथक् शक्तौ तयोरुद्देश्यविधेयभावेनाऽन्वयाऽऽपत्तिः पृथगुपस्थितयोस्तथाऽन्वयस्यौत्सर्गिकत्वात्तत्तद्धातुजन्यतादृशबोधस्य तथाऽन्वयबोधे प्रतिबन्धकताकल्पने तु गौरवम् तस्मात्फलाऽवच्छिन्न-

**मू। न चाऽऽमवातजड़ीकृतकलेवरस्योत्थानाऽनुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगाऽऽपत्तिः, परयत्नस्याऽज्ञानादप्रयोगात् ।**

**किञ्चिच्चेष्टादिना तदवगतौ चायमुत्तिष्ठति शक्त्यभा**

व्यापारे व्यापारावच्छिन्नफले च धातूनां शक्तिः कर्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तद्बोधे नियामकः गौरवं च प्रामाणिकत्वान्नदोषाय। इत्थं च कर्त्राऽऽख्याते व्यापारस्य प्राधान्यम् कर्माऽऽख्याते तु फलस्य यदा यस्य प्राधान्यं तदा तस्मिन् कालान्वयः सूत्रस्थधातुपदादुभयोरपि प्राधान्येनोपस्थितत्वान्नोक्तविषयाऽनवकाशः फलानुत्पत्तिदशायामारब्धेपाके फले वर्त्तमानत्वारोपाद्वा पच्यते इत्यस्योपपत्तिरेकाऽवयवेपि समूहाऽऽरोपादधिश्रयणकाले पचतीति प्रयोगवत् आरोपे च प्रतीतिरेवमानम् व्यापारविगमे फलसत्त्वे ऽपाचि देवदत्तेनेत्यादिप्रयोगास्तु भूतत्वस्योत्पत्तिघटितत्वादित्याहुः। तदपरे न क्षमन्ते पृथगुपस्थितयोस्तथान्वयबोधाभ्युपगमे नानार्थहर्य्यादिपदोपस्थितानामश्वसूर्यादीनामप्युद्देश्यविधेयभावापत्तिरतो विभिन्नपदजन्योपस्थितिरेव तन्त्रताऽनुसर्त्तव्या तदभावाच्च प्रकृते कथं तदन्वयबोधाऽपादनं तादृशफलव्यापारयोर्धातुशक्तौ मानाभावो गौरवं च विशिष्टधर्मस्य शक्यतावच्छेदकत्वे उक्तप्रयोगाणामारोपेणोपपादनं त्वऽगतिकगतिरिति स्पष्टमेव विवेकिनाम् । एतदनुरोधेन भूतत्वस्योत्पत्तिघटितत्वाऽभ्युपगमे परमताऽनुसृतिरपीति व्यापारे आख्यातार्थकालाऽन्वये दूषणमाशङ्क्य निराचष्टे। नचेति । यत्नसत्त्वादिति। यत्नरूपव्यापारस्य वर्त्तमानत्वेन विषयाबाधान्मम तु तदानीं फलाऽनुत्पत्त्या न तादृशप्रयोगाऽऽपत्तिरित्यर्थः। अप्रयोगादिति ॥

ननु परयत्नस्य विजातीयमनःसंयोगाश्रयसमवायरूपहेत्वभावादप्रत्य

**वात् फलन्तु न जायत इति लोकप्रतीतेरिष्टत्वात्। एवञ्च तिङर्थो विशेषणमेव भावनैव प्रधानम्।**

त्वेपि चेष्टादिपञ्चकेण तल्लिङ्गकेन वाऽनुमानेन तदवगतावुत्तिष्ठतीतिप्रयोगाऽऽपत्तिर्दुःसमाधेयैवेत्याशङ्केष्टापत्त्या परिहरति। किञ्चिच्चेष्टादिनेति। यत्किञ्चिच्छरीराऽवयवाऽवच्छिन्नक्रिययेत्यर्थः। तदवगतौ। यत्नानुमितौ। अनुमानप्रयोगश्चैवं देवदत्तीयचेष्टा प्रयत्नजन्या चेष्टात्वादस्मच्चेष्टावत्। अथवाऽयमुत्थानाऽनुकूलयत्नवान् विजातीयचेष्टावत्त्वादहमिवेति चेष्टाप्रयत्नयोः कार्यकारणभावश्च प्रकृतेऽनुकूलस्तर्क इति। परेतूक्तापत्तिमन्यथैव परिहरन्ति। तथाहि आमवातजडीकृतकलेवरप्रयत्नस्योत्थानोद्देश्यकत्वेपि तदजनकत्वान्नोक्तप्रयोगाऽऽपत्तिरतएवोत्थानाय यतत इत्येव तत्र प्रयोगः यागपाकाद्युद्देश्यककुण्डनिर्माणतण्डुलक्रयणादिदशायां यजति पचतीत्यादिप्रयोगवारणाय स्वरूपसम्बन्धरूपप्रयोजकताविशेषस्यैव सम्बन्धतायाअभ्युपेयत्वादिति तच्चिन्त्यम्। तदुद्देश्यकत्वं हि तदिच्छाधीनेच्छाविषयत्वम्। उपायेच्छायाः फलेच्छाधीनत्वात्। उपायत्वम् प्रयोजकत्वमेव। कथमन्यथा तच्चेति प्रकृते यजतीत्यादिप्रयोगो दुर्वार एव तस्मात्साक्षाज्जन्यजनकभावः फलव्यापारयोः सम्बन्ध इत्येवाभ्युपेयम्। तावतैवोक्तप्रयोगवारणात् प्रकृते शक्तिरूपसहकारिकारणाभावेन तदनुत्पत्तावपि तदीययत्ने साक्षाज्जनकत्वस्य निराबाधत्वेनोत्तिष्ठतीतिप्रयोगस्येष्टत्वात् प्रकृतधात्वर्थतयाऽवगते तस्मिन् साध्यत्वस्यैव सत्त्वेनोद्देश्यत्वस्य तदानीमसम्भवाच्च एतदभिप्रेत्यैव सारकृतोत्थानानुकूलयत्नसत्त्व इत्युक्तम्। अत एव पाकाऽनुकूलप्रकृतधात्वर्थयत्नसत्त्वे पचतीत्येव प्रयोगोऽन्यदा तु पाकाय यतते इति। उपसंहरति। एवंचेति। विशेषणमेवेत्येवकारेण तिङर्थस्य विशेष्यत्वव्यवच्छेदः। भावनैवेति। धात्वर्थभावनैवेत्यर्थः। अत्राप्येवशब्देन फलस्य तिङर्थकर्त्रादेश्च व्यवच्छेदः॥

यद्यपि प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथापि "भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति" निरुक्तात् भूवादिसूत्रादिस्थक्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते ।

प्रकृतिप्रत्ययार्थयोरितिव्युत्पत्तिविरोधमाशङ्कते । यद्यपीति। अन्यत्र । पक्तेत्यादौ । दृष्टमिति । तथाच प्रकृत्यर्थभावनायाः प्राधान्योपगमे तद्विरोध इति भावः।भावप्रधानमिति। नामाऽऽख्यातोपसर्गनिपातभेदेनोद्दिष्टम् चतुर्विधं पदं प्रकल्प्य नामाऽऽख्यातलक्षणप्रतिपादके इमे वाक्ये अत्राऽऽख्यातं भावप्रधानमिति योजना यथाश्रुते यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यभियुक्तोक्तेः शाब्दबोधे प्राङ्निर्दिष्टस्यैवोद्देश्यतया विवक्षितार्थाऽलाभात्। अत एव वृद्धिशब्दस्य प्राङ्निर्देशो मङ्गलार्थं इत्याऽऽकरोक्तं संगच्छते। एवमग्रेपि आख्यातत्वावच्छिन्ने प्रधानभावार्थप्रतिपादकस्वरूपलक्षणे तात्पर्यावधारणाच्च लक्षणवाक्याच्छब्दमर्यादया प्रकृतपदद्वयार्थाभिदस्याऽधिकस्य भानेऽपि न क्षतिः।लक्ष्यताऽवच्छेदकं च तिङन्तरूपाऽऽख्यातत्वम्। आख्यातमाख्यातेनेत्यादौ तथैवाऽऽख्यातपदस्य प्रवृत्त्यवधारणात्। भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य तत्र भावः प्रधानमिति प्रकृतनिरुक्तभाष्याच्च ।एतेन तिङः प्रधानभावार्थकत्वस्य प्रतिपादकमेव तदिति यदाहुस्त§ प्रत्युक्ताः। तच्छब्दपरामृश्यभावादिचतुष्टयस्यैकदा तिङा प्रतिपादनाऽसम्भवाच्च।भावत्वं निष्पाद्यत्वम्।नातः कर्माऽऽख्यातस्य फलविशेषकबोधकतावादिमते तत्राऽप्रसक्तिः। प्रधानप्रतिपादकत्वस्य नाममात्रे भावप्रतिपादकस्य भुक्त्वेत्यादि नाम्न्यतिप्रसक्तत्वात्तद्वारणाय विशिष्ट मुपात्तम् प्राधानं चोपस्थितत्वात्स्ववाचकप्रकृतिकप्रत्ययार्थनिरूपित मेव नातः

§ नैयायिकाः

काष्ठैः पाक इत्यादौ प्रत्ययार्थकारणनिष्ठप्रकारतानिरूपितविशेष्यता शालिबोधप्रतिपादके पाकादिनाऽतिप्रसङ्गः। तथाच तिङ्बोध्यार्थनिष्ठप्रकारतानिरूपितविशेष्यतात्पर्यप्रतिपादकत्वम् तत्पर्य्यवस्यति। इतराविशेषणत्वरूपं तु न तत् (प्रधानत्वम्)पचति भवतीत्यादिवाक्यघटकपच्याद्यर्थक्रियायां तदसत्त्वेन पचतीत्याख्यातेऽव्याप्तेः क्त्वः पूर्वकालार्थकत्वस्य निराकरिष्यमाणत्वान्नोक्तलक्षणस्य लक्ष्येति प्रसङ्गः। कृदभिहितो भावो द्रव्यवत्प्रकाशत इति भाष्येण पाक इत्यादाविव तस्य सत्त्वाऽतिदेशेन साध्यत्वरूपभावत्वाभावादेव नाऽतिप्रसङ्गः इति तु न सत् यतः साधुत्वान्वाख्यायकव्याकरणस्मृत्या यत्कृदर्थभावे लिङ्गाद्यन्वयो ऽनुभवसिद्ध स्तस्मिन्नेव तदतिदिश्यते यथा पाक इत्यादौ घञर्थभावस्य क्त्वार्थे तु लिङ्गाद्यननुभवेन तत्र तदतिदेशविषयस्याऽन्वाख्येयत्वात् अव्ययकत्वेन तस्य धात्वर्थानुवादकत्वस्य वक्ष्यमाणत्वाच्च। एतेन पचति भवतीत्यादिवाक्यघटकाख्यातसंग्रहाय क्वचित्क्रियान्तरनिष्ठविशेष्यतानिरूपितविशेषणत्वाभाववत्त्वम् तत् पच्याद्यर्थक्रियाया भवत्यर्थविशेषणत्वेपि क्वचित्तदसमभिव्याहारे विशेष्यतयैव भानात् न तत्रातिप्रसङ्ग इत्युक्तम्। उक्तापेक्षया ऽभावघटितत्वेन गुरुत्वात्। अग्रिम § लक्षणे प्राधान्यस्य विशेष्यत्वरूपस्यैव वक्ष्यमाणतयाऽत्रापि तस्यैव न्याय्यत्वात्तत्र भावः प्रधानमिति भाष्येण मदुक्तार्थस्यैवलाभाच्च सत्त्वप्रधानानीति अत्रापि पूर्ववदुद्देश्यविधेयभावकल्पना लक्ष्यतावच्छेदकं च कृदाद्यन्तप्रकृतिकविभक्त्यन्तत्वरूपं नामत्वम् प्रकृतिः प्रत्ययो विभक्तिरित्येतन्नामसंज्ञा द्रव्यं लिङ्गं संख्या च नामार्थ इति तद्भाष्यात्§ क्रियाप्रधानमाख्यातं सत्त्वप्रधानं नाम यतः क्रियां पृष्ट स्तिङाचष्टे किङ्करोति पचतीति द्रव्यं पृष्टः कृता ऽऽचष्टे कतरो देवदत्तो यः पाचक इति प्रशंसायामिति सूत्रस्थमहाभाष्याच्च तत्र कृतेतरस्य तत्प्रकृतिकसुबन्तेनेतरार्थः॥

§ सत्त्वप्रधानीत्यत्रेत्यर्थः

§ सत्त्वप्रधानानि नामानीति निरुक्तभाष्यादित्यर्थः

क्तता द्रव्याऽभिधानेऽपि नकेवलेतिन्यायेन केवलस्य प्रयोगाऽनर्हत्वात्। निरुक्तभाष्यस्थविभक्तिपदस्वारस्याच्च व्युत्पत्तिपक्षमवलम्ब्य वेदं नातोव्युत्पत्तिपक्षे नामाऽऽदिष्वतिप्रसङ्गः। लक्षणमाह। सत्त्वप्रधानानीति। सत्त्वं द्रव्यं वक्ष्यमाणलक्षणं तत्प्रधानं यत्रेति विग्रहाल्लिङ्गादिनिष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थप्रतिपादकत्वं नामलक्षणमित्यर्थः। विशेष्याऽर्थकत्वस्य निपाताऽऽख्यातादावतिप्रसक्तत्वात्तद्वारणाय प्रकारतानिरूपितत्वान्तं विशेषणम् व्यक्तिबोधस्य धर्मविषयकत्वनियमेन जातिप्रकारतानिरूपितत्वस्यातिप्रसङ्गाऽवारकत्वात्तदनुपादानम् लक्ष्यतावच्छेदकाऽनाक्रान्तेषु याद‍ृच्छिकेष्वतिप्रसङ्गस्तु लक्षणे तदतिरिक्तत्वविशेषणेनैव परिहरणीयः। एवं धात्वर्थाऽनुवादकप्रत्ययान्तेष्वप्रसङ्गोऽपि लक्ष्यतावच्छेदके तद्विशेषणेनैव तत्र नामत्वव्यवहारोऽपि स्वाद्यन्तत्वनिबन्धनो भाक्त इति तद्भावः। उपसर्गादिलक्षणं तु वक्ष्यते। भूवादीति। इत्थं हि तत्र भाष्यम् कातर्हीयं वाचो युक्तिः पचति भवति त्वं पचसि भवति पक्ष्यति भवतीति सैषा वाचो युक्तिः पचादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्तीति तेनचाऽऽहत्यैव पचाद्यर्थक्रियाकर्तृकभवनक्रियायाः प्राधान्यं प्रतिपाद्यते धात्वर्थक्रियाया आख्यातार्थविशेषणत्वाभ्युपगमे तु स्वस्वार्थविरुद्धत्वेन पदार्थान्तरे विशेषणतयान्वये नैराकाङ्क्ष्येण भवत्यर्थक्रियायामाख्यातार्थविशेषणपचादिक्रियाणामन्वयाऽसम्भवेन तद्विरोधोऽप्रतिरोध एव स्यादिति भावः। सूत्रादावित्यादिना प्रशंसायामिति सूत्रपरिग्रहः। ननु भावप्रधानमाख्यातमिति निरुक्तेन तिङन्ते भावनाऽपरपर्य्यायभावप्राधान्यं प्रतिपाद्यते सा च नैयायिकमते कर्त्राख्याते कर्त्तृत्वं कृतिः कर्माख्याते कर्मत्वम् फलं तन्निरूपिताऽऽश्रयत्वं वा तैः सङ्ख्याकालातिरिक्ताऽऽख्यातार्थस्य भावनापदव्यपदेश्यत्वोपगमात् भावाऽऽख्याते तु धात्वर्थव्यापार एवाऽनुवादकत्वात्तदाख्यातस्य। प्राधान्यं च तस्याः प्रकृत्यर्थापेक्षं। समानप्रत्ययोपात्तत्वप्रत्यासत्त्या फलमात्रं धात्वर्थ इति वदतां मीमांसकानामेतदपि भाष्यं मूलं-

तत्र लडाद्यर्थकालान्वयोपगमे तु तदपेक्षमपि उक्तभाष्येपि क्रियापदार्थ-
स्तत्सम्मतभावनैव। अत एव क्रियां पृष्टस्तिङाचष्टे त्येवोक्तं न तु तिङन्तेनेति
कृत्यादिरूपभावनाया आख्यातार्थत्वे मानं तु भूवादिसूत्रस्थं कथं ज्ञायतेऽयं
प्रकृत्यर्थोऽयं प्रत्ययार्थ इति प्रघट्टकेऽन्वयव्यतिरेकाभ्यां शक्तिग्राहकमिह पच
तीत्युक्ते कश्चिच्छब्दः श्रूयते पच्शब्दश्चकारान्तोऽतिश्च प्रत्ययः श्रूयते प्रत्य-
यार्थोपि कश्चिद्गम्यते विक्लितिः कर्तृत्वमेकत्वं पठतीत्युक्ते कश्चिच्छब्दो
हीयते कश्चिदुपजायते कश्चिदन्वयी पच्छब्दो हीयते पठ्शब्द उपजायते
अतिशब्दश्चान्वयी अर्थोपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी वि-
क्लित्तिर्हीयते पठिक्रियोपजायते कर्तृत्वमेकत्वं चान्वयि तेन मन्यामहे
यः शब्दो हीयते तस्याऽसावर्थो योऽर्थो हीयते य शब्द उपजायते तस्या
सावर्थो योऽर्थ उपजायते यः शब्दोऽन्वयी तस्याऽसावर्थो योऽर्थोऽन्वयीति
भाष्यम्। तत्राऽतिः प्रत्ययस्य कैश्चित्पूर्वाचार्यैः कल्पनादतिश्च प्रत्यय इत्युक्त
मिति कैयटः। पच्यते पठ्यते इत्यादावप्युक्ताऽन्वयव्यतिरेकोह्निन कर्मत्व-
स्याप्याख्यातार्थत्वं न्यायसाम्यात्तत एवाऽवधार्यते। किञ्च भावप्रधानमि-
ति निरुक्तं तद्भाष्यस्वरसात्सकालकारकसङ्ख्याविशिष्टभावनाया धात्वर्थ-
त्वमाश्रित्य प्रवृत्तम्। अत एव नामलक्षणनिर्वचनेन कारकस्य तत्र ना-
मार्थत्वेनोल्लेखः तस्य धातुलभ्यत्वेन नामार्थत्वाभावादिति तदाशयात्।
न च रूपसूत्रस्थभाष्यप्रामाण्यात् क्रियायामेकत्वसत्त्वेपि द्वित्वाऽऽदिसत्त्वे
मानाऽभावात्कथं तयोक्तसङ्गतिरिति वाच्यम्। परैरित्यादिना वक्ष्यमाण-
रीत्या कारकगतायास्तस्यास्तत्राऽऽरोपसम्भवात्। कालसङ्ख्ययो र्द्योत्यत्व-
वत्कारकस्याऽपि द्योत्यत्वं न्यायसाम्यात्तस्य प्रत्ययार्थत्वोपगमे पाचक इ-
त्यादाविव प्राधान्यापत्तेः जात्यतिरिक्तपदार्थस्य विशेषणतायास्त्यक्तत्वात्
अत एव स्त्रियामिति सूत्रे भाष्ये प्राधान्याऽऽपत्तिभिया लिङ्गस्य वाच्यता-
पक्ष उपेक्षितः वाच्यस्यापि प्रकृत्यर्थविशेषणत्वे तदसङ्गतिः स्पष्टैव। न
चोक्तकल्पे ग्रामं गच्छतीत्यत्र कर्मबोधकधातोरपादानादिकारकविशिष्ट

क्रियाबोधाऽऽपत्तिः पचन्त्यादिरूपसमभिव्याहृतद्योतकविभक्तेरभावात् तत्र कर्तृकर्मणोस्तिङ्समभिव्याहृतद्वितीयादिविभक्तिश्च द्योतिका अनेषां त्वन्यः नहि स्वप्रकृतिकप्रत्ययत्वमेव स्वार्थद्योतकतायां तन्त्रम् उपसर्गाणां तदऽनापत्तेः किन्तु स्वसमभिव्याहृतप्रत्ययनिपातान्यतरत्वम् तच्च तण्डुलादिपदोत्तरविभक्तेरप्यऽक्षतम् द्रव्यस्य सङ्ख्याऽविशेषितस्य तत्त्वे नाम्नः सङ्ख्याभानाऽऽपत्त्या तदर्थकत्वमावश्यकमिति तद्भावः । अत एव भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्येति भाष्यस्थकारकपदस्यासङ्कुचितवृत्तितापि सङ्गच्छते । यदि चान्यप्रकृतिकविभक्तेरन्यप्रकृत्यर्थद्योतकतायां क्वाप्यदृष्टचरत्वान्नोक्ताऽऽशयवर्णनं साधीय इति विभाव्यते तथापि सङ्ख्याकालकर्तृकर्मकारकविशिष्टक्रियाया धात्वर्थत्वमादाय तत्प्रवृत्तिः आख्यातस्यैव तादृशक्रियाद्योतकत्वासम्भवात् । न चास्त्वेवमेवाऽऽशयः वाच्यताकल्पोक्तकार्यकारणभावकल्पनप्रयुक्तलाघवस्योपोद्बलकत्वादिति वाच्यम् । यत्तादृशमते प्रक्रियादशायां चक्षुःश्रुत्युक्तिविस्तरोप्याश्रयितु मशक्यम् प्रागेव तु प्रकृतिप्रत्ययार्थविवेचनचतुरै राजपादैः। तथाहि कारकविशिष्टक्रियाया धात्वर्थत्वे लः कर्मणीतिविधिवैयर्थ्यापत्तेः। न च तस्य द्योतकत्वप्रतिपादकता शानजादेरपि तथात्वाऽऽपत्त्या तत्राऽपि कर्त्रादीनां क्रियाविशेषणतया भानापत्तेः। किञ्च चैत्रौ पचत इत्यादौ चैत्राऽऽदिगतसङ्ख्याया स्तत्राऽऽरोपे मानाऽभावः । वाचकतामते कर्त्राऽऽद्यंशे तद्भानोपगमेन प्रयोगप्रामाण्योपपत्तावप्रामाण्याऽभ्युपगमस्याऽन्याय्यत्वात् स्वाश्रयाऽऽधेयत्वसम्बन्धेन द्वित्वादेस्तत्र सत्त्वेऽप्यव्यावर्त्तकतया विशेषणत्वाऽभावेन तद्वैशिष्ट्यस्य तत्राऽसम्भवाच्च नहि द्वित्वाऽऽश्रयाऽऽश्रितं घटादिरूपं क्रिया वा द्वे इति व्यवह्रियते । अधिकमग्रे वक्ष्यते । किञ्च कर्तृकर्मणोः पदार्थैकदेशतया तत्र देवदत्ताऽऽदीनामन्वयाऽऽसम्भवः पदार्थः पदार्थेनाऽन्वेतीतिव्युत्पत्तेः तदन्वयाऽभ्युपगमेऽपि धात्वर्थेऽभेदेन विशेषणतया स्तोकादिपदवन्नपुंसकत्वाऽऽपत्तिश्च ।अपि च क्रियाविशेषणत्वेनोप

स्थितस्य कर्त्तुर्विशेषणाऽऽकाङ्क्षाविरहात्पचतीत्युक्ते कः कीदृगिति प्रश्नाऽनुपपत्तिः। वक्ष्यति हि ग्रन्थकृत् नहि गुणभूतः कर्त्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलमिति। अत एवैतत्प्रामाण्यात्प्रत्ययवाच्यत्वं कर्त्तुर्धात्वर्थविशेषणत्वं चेति प्रगर्ज्जन्तः परास्ताः। प्रत्ययस्य द्योतकतायामेव तन्निर्भरस्य दर्शितत्वात् प्रत्ययार्थप्राधान्यस्यैव ततो लाभाच्च। न च भावनायाः प्रत्ययवाच्यतापक्षेप्युक्तप्रश्नाऽनुपपत्तिर्दुःसमाधेयैवेति वाच्यम्। शक्तिभ्रमात्लक्षणया वोपस्थितस्य कर्त्तुः साकाङ्क्षत्वसम्भवात्। किञ्च प्रत्ययानां प्रकृत्यर्थाऽन्वित स्वार्थबोधकत्वमिति व्युत्पत्तिसिद्धविभक्त्यर्थसङ्ख्याप्रकारकबोधं प्रति विशेष्यतया प्रकृतिजन्योपस्थितेर्हेतुत्वस्य कर्त्राऽऽदावभावेन सङ्ख्याऽन्वयाऽसम्भवः। आख्यातार्थसङ्ख्याप्रकारकबोधे आख्यातार्थकर्त्तृकर्मोपस्थितेर्हेतुत्वकल्पनमप्याग्रहमूलकमेव पदार्थयोराधाराऽऽधेयभावेनाऽन्वये विभिन्नपदजन्योपस्थितेस्तन्त्रत्वात्। विभक्त्यर्थकर्त्तुर्लिङ्गानन्वयिनोऽद्रव्यतया तत्र सङ्ख्यान्वयासम्भवात् गुणानां च परार्थत्वादिति न्यायाच्च। सम्मतेऽयोग्यतया तस्याः स्वप्रकृत्यर्थानन्वयेऽपि प्रकृत्यर्थाऽन्वयनियमोऽत्यत एव अणु रपि विशेषोऽध्यवसायकर इति न्यायात्। किञ्चाऽऽख्यातस्यकर्त्रर्थकत्वे राजसम्बन्धिपुरुषाऽभिन्नकर्त्तृकं गमनमित्यभिप्रायेण राज्ञः पुरुषो गच्छतीतिवत् स्वस्वामिभावादिसम्बन्धेन राज्ञः कर्त्रन्वयविवक्षया राजा पुरुषो गच्छतीति प्रयोगापत्तिः। न च तत्र षष्ठीप्रसक्तिः। तदर्थस्य प्रातिपदिकार्थ विशेष्यतया विवक्षायामेव तत्प्रसरात्। व्यक्तीभविष्यति चैतदुपरिष्टात्। आख्यातार्थकर्त्तुरनामधात्वर्थत्वेन नामार्थधात्वर्थत्वयोरिति व्युत्पत्तिविषयताया अप्यभावात्। न च तत्रापि चैत्रस्य पाकानुकूला कृतिरिति चैत्रस्य पचतीति प्रयोगापत्तिरिति वाच्यम्। षष्ठ्यर्थस्य नामार्थसाकाङ्क्षतयाऽऽख्यातार्थकृतेश्च प्रथमान्तार्थसाकाङ्क्षतया परस्पराकाङ्क्षाविरहात्। गुरुविप्रलब्धिदुर्गतानामित्यादाविव पाकादिसम्बन्धितया चैत्रादिविवक्षायां षष्ठ्यन्तप्रयोगस्य सर्वैरेवोपगमाच्च। तस्माद्धात्वर्थक्रियाया आख्यातार्थं प्रति

प्राधान्ये निरुक्तमानोपन्यसनं मुधैवेति कोविदो विदांकुर्वन्तु । पचति भवतीत्यादौ तु पाकानुकूलाऽऽख्यातार्थकृतौ भवनाऽऽश्रयत्वरूपभवतीति तिङन्तार्थभावनान्वयोपगमेन पाकविशिष्टकृतौ भवनकर्तृत्वेऽङ्गते तद्विशेषणपच्यर्थक्रियायामपि तल्लाभात् । पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीति भाष्यस्थादिपदस्य हेतुपरतया तेन व्यापारार्थकपचादिशब्दस्य समासे पचाद्यर्थहेतवः क्रियाः कृत्यात्मकव्यापारा भवनक्रिया निरूपितकर्तृत्ववत्यो भवन्तीत्यर्थस्य तत्लाभाद्वा । तादृशैकवाक्यत्वस्याऽस्माभिरभ्युपगमान्न भूवादिसूत्रस्थभाष्यविरोधोऽपि तादृशभाष्यप्रामाण्यादेव च भवन्मते धात्वर्थप्रकारकबोधे धातुजन्योपस्थितेर्हेतुत्ववन्मन्मतेऽप्याऽऽख्यातार्थभावनाप्रकारकबोधे तिङ्जन्यभावनोपस्थितेरपि विशेष्यतासम्बन्धेन हेतुत्वस्य कल्पनतयोर्नैकवाक्यत्वस्य सूपपादत्वात् । न चोक्तबोधाभ्युपगमे आख्यातेन कर्तुरबोधनाच्चैत्रादिपदोत्तरं तृतीयाऽऽपत्तिरिति वाच्यम् । तस्यां चैत्रस्याऽऽधेयतासम्बन्धेनाऽन्वयाभ्युपगमेन मुख्यविशेष्यतयैव तज्ज्ञानेनाऽऽश्रयातिरिक्तांशे विशेषणतया कृत्याश्रयबोधनरूपस्याभिधानस्य तत्र सत्त्वात्तृतीयाऽऽपत्त्यसम्भवात् । न च चैत्रः पचतीत्येतावन्मात्रप्रयोगेऽपि चैत्रस्याऽऽधेयतासम्बन्धे नान्वयाऽऽपत्तिरिति वाच्यम्। प्रथमान्तार्थप्रकारकबोधे तिङर्थविशेष्यतापन्नभावनोपस्थितेर्हेतुत्वस्यापि कल्पनेनोक्तदोषाऽप्रसक्तेः । न च चैत्रे पाकानुकूला कृतिरित्यत्रैव चैत्रः पचति भवतीत्यादौ सप्तम्याऽऽपत्तिर्दुर्वारैवेति वाच्यम् । धात्वर्थविशेषणभूताऽऽधेयत्वस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव सप्तमी विधानात् । एवमाधेयत्वस्य प्रकारतयाऽविवक्षणाच्च । इदं चाख्यातार्थकृतिमुख्यविशेष्यकबोधमभिप्रेत्योक्तं । वस्तुतस्तु चैत्रः पचति भवतीत्यादौ प्रथमान्तार्थविशेष्यकबोधाभ्युपगमेऽपि नैकवाक्यताक्षतिः । भवनकर्तृत्वाऽन्वितताया एव पाकविषयकभावनायाश्चैत्रांशे प्रकारतया भानसम्भवात् । एतेन कृतिविशेष्यकबोधाभ्युपगमे प्रथमान्तार्थप्रकारकबोधे ति-

अपिचआख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः स-
ममभेदान्वयात्प्रथमान्तस्य प्राधान्यापत्तिः।तथा च
पश्य मृगोधावतीत्यत्र भाष्यसिद्धैकवाक्यता न
स्यात् प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशि
क्रियायां कर्म्मत्वाऽऽपत्तौ द्वितीयाऽऽपत्तेः। न चैवम्
प्रथमासामानाधिकरण्यात् शतृ प्रसङ्गः। एव मपि

ऽर्थ भावनोपस्थितै हेतुत्वकल्पने गौरवमिति दूषणमलग्नकं विशेषणतयै-
व तदन्वयाभ्युपगमादित्यरुचे राह। अपिचेति। अभेदान्वयादिति। इदं च
तन्मतेऽपि कर्ताऽऽख्यातार्थ इति स्वीयवासनाऽनुसारेण। नैयायिकमते तु
कृतेराख्यातार्थतया तस्या आश्रयत्वेनैव प्रथमान्तपदार्थेऽन्वयादित्यवधे
यम्॥ भाष्यसिद्धेति। क्रियाऽपि कृत्रिमं कर्म क्रियाऽपि हि क्रिययेप्सिता
भवति कया संदर्शनप्रार्थनादिक्रिययेति कर्मणायमिति सूत्रस्थभाष्यसिद्धे
त्यर्थः। तन्मते धावनाऽनुकूलकृतिमान् मृग इत्यवान्तरवाक्यार्थबोधस्य
तत्र जायमानत्वेन धावनस्य कर्त्तृवत्त्वतया विशेषणतयाऽन्यत्राऽन्वये नै-
राकाङ्क्ष्येण दर्शने कर्मतयाऽन्वयाऽयोगात्। किन्तु धावनाऽनुकूलकृतिमान्
मृगो दर्शनाश्रयस्त्वमित्येव बोध एष्टव्यः। एवं चैकमुख्यविशेष्यकबोधजन-
कत्वरूपैकवाक्यत्वाऽभावात्तद्विरोधो दुर्वार इति भावः। ननु धावनाऽनु-
कूलकृतिमन्मृगस्यैव कर्मतया दृश्यर्थेऽन्वयान्नोक्तदोषोऽत आह। प्रथमा-
न्तेति। कर्मत्वाऽऽपत्ताविति। कर्मत्वेन प्रकारापत्तावित्यर्थः। कर्मतासम्ब-
न्धेन मृगस्य दर्शनक्रियायामन्वयस्त्वसम्भवी नामार्थधात्वर्थयोरिति
व्युत्पत्तिविरोधाद्वक्ष्यमाणद्वितीयाऽऽपादनविरोधाच्चेति भावः। द्वितीया-
पत्तेरिति। कर्मणोऽत्र तिङाऽनभिधानेनाऽनभिहिताधिकारीयकर्मणिद्वि-
तीयेत्यस्य जागरूकत्वादिति भावः। एवमिति। मृगपदोत्तरं द्वितीया

द्वितीयाया दुर्वारत्वेन पश्यमृग इत्यादि वाक्यस्यैवा सम्भवाऽऽपत्तेः। न च पश्येत्यत्र तमितिकर्माध्याहार्य्यम्। वाक्यभेदप्रसङ्गात्। उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वादध्याहारेऽनन्वयापत्तेश्च। एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं

प्रसङ्ग इत्यर्थः। शानज्विधौ लडर्थकर्तुः प्रथमान्तार्थसामानाधिकरण्येन विशेषितत्वान्मृगपदस्य द्वितीयान्तत्वे तदाऽऽपत्त्या द्वितीया न भविष्यतीति शङ्कितुराशयः। नहि शत्राऽऽपत्तिर्द्वितीयाप्रतिबन्धिका किन्तु कर्मणोऽभिधानं तदभावसत्त्वाच्च द्वितीया दुर्वारेत्याशयेन समाधत्ते। एवमपीति। असम्भवापत्तेरिति। मृगस्य कर्मतया दृश्यर्थेऽन्वयोपगमे धावन्तं मृगं पश्येति वाक्यस्यैवोचितत्वादित्यर्थः। ननु अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति जैमिनिसूत्राद्विच्छिद्य पाठे साकाङ्क्षत्वे सत्येकार्थप्रतिपत्तिजनकत्वमेकवाक्यत्वमित्यर्थो लभ्यते प्रकृते तमित्युक्तकर्मित्याकाङ्क्षासत्त्वाद्यथाकथञ्चिद्वाक्यद्वयस्य धावनाऽनुकूलकृतिमन्मृगकर्मकदर्शनरूपैकार्थप्रतिपादकत्वाच्च न वाक्यभेदप्रसङ्गोऽत आह। उत्कटेति। अध्याहार इति। पूर्वाऽनुपात्ताकाङ्क्षितपदस्याऽनुसन्धाने इत्यर्थः। अनन्वयापत्तेश्चेति। तत्पदेन मृगस्य धावनाऽनुकूलकृतिमन्मृगस्य वा परामर्शेऽपीप्सितस्य तादृशधावनक्रियाया दृश्यर्थकर्मत्वान्वयस्य तद्वाक्याज्ज्ञानाऽनुपपत्तेरित्यर्थः। उपसंहरति। एवंचेति। आख्यातार्थविशेष्यकबोधाङ्गीकर्तृनये एकवाक्यताऽनुपपत्तिरूपदूषणदार्ढ्यं चेत्यर्थः। नादरणीयमिति। उक्तदोषग्रस्तत्वादिति भावः। स्वमतनिष्कर्षमाह। किंत्विति। फलेव्यभिचारनिरासायोपस्थितिविशिष्यतां विशिनष्टि। भावनात्वाव-

नादरणीयम् किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतयाकारणमिति कार्यकारणभावोद्रष्टव्यः भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः पश्य मृगो धावति पचति भवति इत्याद्यनुरोधादितिदिक् ।

च्छिन्नेति । ननु त्वन्मतेऽप्याख्यातस्य धात्वर्थमुख्यविशेष्यकबोधजनकत्वनियमभङ्गप्रसङ्गोऽत आह । पश्येति । तथाचोक्तनियम एतदतिरिक्तविषयक इति भावः । ननु धावनकर्तृत्वविशिष्टमृगरूपवाक्यार्थस्य कर्मतया दर्शनेन्वयः तथाच न नामार्थयोरिति व्युत्पत्तिविरोधः वाक्यस्यानामत्वात् । अत एव न ततो द्वितीयापत्तिरपि धावनविशिष्टस्य दर्शनकर्मत्वावगतौ विशेषणीभूतधावनस्यापि कर्मतालाभाच्च न प्रतिपिपादयिषितान्वयालाभोपि चैत्रः पचति भवतीत्यादौ तूक्तदिशैकवाक्यत्वमुपपादितमेव । तथाचोक्तकार्य्यकारणभावकल्पे कथं तदनुरोधो वीजमत आह । दिगिति । तदर्थस्त्वेवं रीत्या वाक्यैकवाक्यताप्रतिपादने भाष्यकारसम्मतपदैकवाक्यतया प्रतिपिपादयिषितान्वयालाभ एव । किं चाभेदेन नीलविशिष्टघटस्य कर्मत्वेप्रतिपादयिषिते नीलं घटं जानातीत्यादौ द्वितीयानुपपत्तिरिति । अत्र नैयायिकाः । धावनक्रियाकर्तृत्वावरुद्ध मृगस्य कर्मतासम्बन्धेन दृश्यर्थेन्वयोपगमात् पदैकवाक्यताभङ्गः । तदवरुद्धं च तदन्वयितया तात्पर्य्यविषयत्वम् । न चैवं कर्मतासंसर्गेण तण्डुलस्याप्यन्वयसम्भवात्तण्डुलः पचतीति प्रयोगापत्तिरिति वाच्यम् । यतो न वयं सामान्यतः कर्मत्वादि भेदसम्बन्धेन नामार्थस्य धात्वर्थेन्वयमभ्युपेमः किन्तु क्रियान्तरकर्तृत्वावरुद्धस्य । न च तण्डुलस्तथा येन पच्या-

थार्थे तस्य कर्मतासंसर्गः स्यात् । अत एव काष्ठं भस्मराशिः करोतीति न प्रयोगः भस्मराशेः कर्तृत्वानवरुद्धत्वात् काष्ठं भस्मराशिः क्रियते इत्यादौ कर्मत्वान्तरावरुद्धक्रियायां तु तदनवरुद्धस्यापि व्युत्पत्तिवैचित्र्यात् । तस्य तत्र तत्संसर्गत्वाऽनभ्युपगमे वाक्याऽभेदाऽऽपत्त्या तद्वाक्यजबोधस्य काष्ठं भस्मति भस्म क्रियते इति वाक्यद्वयजबोधस्येव भस्मकाष्ठविलक्षितिर्वेति संशयनिवर्त्तकत्वाऽनापत्तेरित्याद्यन्यत्र प्रपञ्चितम्। एवं चाऽत्र पदैकवाक्यताया अनायासेनैवोपपत्तौ धात्वर्थभावनाप्रकारकबोधे भावनोपस्थितेर्हेतुत्वं निष्प्रमाणकमेव । नाऽपि स्तुतपदोत्तरं द्वितीयाऽऽपत्तिः प्रातिपदिकार्थविशेष्यतया कर्मत्वस्याऽविवक्षणादत एव न तत्र षष्ठीप्रसक्तिरपि । संसर्गस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव षष्ठीशेष इत्यनेन तद्विधानादेवं घटो नास्तीत्यादावपि बोध्यम्। किं तु प्रातिपदिकार्थे तत्र प्रथमैव । नाऽपि नीलं घटं जानातीति प्रयोगाऽनुपपत्तिर्घटस्य क्रियान्तरकर्तृकत्वाऽनवरुद्धत्वेन । कर्मत्वान्तरविशेषणतानापन्नायां जानात्यर्थक्रियायां कर्मतायाः संसर्गत्वाऽसम्भवात् । पश्य लक्ष्मण पम्पायां बकः परमधार्मिक इत्यादावस्तीत्यध्याहार्यम् । वस्तुतस्त्वत्र दृष्टान्तेन तण्डुलः पचतीत्यादौ बोधाऽऽपादनं न विचारसहं कर्मताऽन्यसंसर्गकपच्यर्थविशेष्यकबोधस्याऽप्रसिद्धौ वाऽऽपादनाऽसम्भवात् । तण्डुलं पचतीत्यादौ विभक्त्यर्थकर्मत्वसम्बन्धेन तादृशबोधः प्रसिद्ध इति चेत्तर्हि तादृशबोधे द्वितीयान्ततण्डुलपदसमभिव्याहृतपचतीत्यानुपूर्वीज्ञानस्य हेतुतया तदभावादेवाऽऽपाद्यस्याप्यऽसम्भवात् । तदुक्तं यादृशं फलं क्वचित्प्रसिद्धं तादृशस्यैवाऽऽपत्तिः सम्भवतीति । एतेन पश्य लक्ष्मणेत्यत्राऽस्तिर्भवतीपरोऽनुप्रयुज्यमानोप्यस्तीति भाष्यस्याऽपिशब्दस्वारस्येन वाक्यपरिपोषकक्रियान्तराऽभावेऽस्तेरध्याहार इत्यर्थलाभेन प्रकृते वाक्यपरिपोषिकायादर्शनक्रियायाः सत्त्वेन तदध्याहारे मानाभावात्कर्मतासंसर्गेणाऽन्वयोऽनुपपन्न इति दूषणमलमकम् । एवं चाऽऽख्याते प्रथमान्तपदसमभिव्याहारे प्रायः प्रथमान्तार्थविशे-

ष्यकबोधो निराबाधः। अत एव यो यः शूद्रस्य पचति द्विजोऽयं सोऽतिनिन्दित इत्यत्र प्रधानपरामर्शितदो द्विजपरामर्शकत्वम्। ननु प्रथमान्तार्थविशेष्यकबोधवादिमते पचतिकल्पं चैत्रः पचतःकल्पं चैत्रौ इत्यादौ कल्पबाद्यन्तस्य नामतया तद्विशेषणवाचकतया च प्रथमान्तचैत्रादिपदसमानलिङ्गवचनत्वाऽऽपत्तिरिति चेन्न। स्वार्थिकानां प्रायशः प्रकृत्यर्थताऽवच्छेदकगतशुक्लादिद्योतकतया प्रकृते प्रकृत्यर्थताऽवच्छेदकक्रियागतेषदसमासत्वस्य कल्पपा द्योतनात्तस्याऽसत्त्वाभ्यां प्रकृत्यर्थतावच्छेदकसमानस्य भावेषदसमासत्वप्रतिपादककल्पबाद्यंते नपुंसकैकवचनान्तत्वयोरौचित्यात्। कल्पबाद्यन्तस्य नामत्वेन समानविभक्तिकत्वेन च तदर्थस्य चैत्रेऽभेदान्वयाऽऽपत्तिरिति तु मूर्खप्रलपितत्वादनादेयम्। लक्ष्यार्थकर्त्तुरभेदान्वयस्येष्टत्वात्। शक्यार्थस्य त्वयोग्यत्वादेवाऽनन्वयात्। घटः पट इत्यादौ व्यभिचारवारणाय व्युत्पन्नावसति बाधके इति विशेषणाद्वत्याहुः। अत्र इमाभाति। प्रथमान्तकर्तृवाचकपदसमभिव्याहारे प्रायः प्रथमान्तार्थाऽविशेष्यकबोधएव नैयायिकानां। क्वचित्तु पश्य मृगो धावतीत्यादौ कवाक्यताऽनुरोधात्तिङर्थभावनाविशेष्यकोऽपि सः। तथाहि वैयाकरणैकतत्स्थलीयैकवाक्यतानुरोधाद्धात्वर्थभावनाप्रकारकबोधे धातुजन्यभावनोपस्थितेर्हेतुता कल्प्यते। नैयायिकैस्तु तिङर्थभावनाविशेष्यकबोधे धातुजन्यभावनोपस्थितिः समसेव। प्रकृतिप्रत्ययार्थयोरिति प्रवादाऽनुरोधात् प्रथमान्तार्थकर्त्तृप्रकारकबोधे क्रियान्तरकर्त्तृत्वविशेष्यतापन्नतिङर्थभावनोपस्थितेरपि सा कल्प्यते। तथाचोक्तस्थले आधेयतासम्बन्धेन मृगविशिष्टधावनाऽनुकूलकृतेः कर्मतया दृश्यर्थेऽन्वये मृगनिष्ठा या धावनाऽनुकूला कृतिस्तत्कर्मकदर्शनाऽऽश्रयस्त्वमिति वाक्यार्थबोधः। धावनविशिष्टकृतौ च बोधितकर्मत्वस्य सविशेषणेहीति न्यायाद्धावने पर्यवसानाच्च प्रतिपिपादयिषितार्थस्याऽपि लाभः। नाऽपि मृगपदोत्तरं द्वितीयाऽऽपत्तिः मृगकर्मताया एतद्वाक्यादलाभात्। एवं च पचतिभवतीत्यत्रा

इत्थं च पचतीत्यत्रैकाऽऽश्रयिका पाकाऽनुकूला भावना पच्यते इत्यत्रैकाऽऽश्रया या विक्लित्तिस्तदनुकूला भावनेति बोधः ।

ऽपि वर्त्तमानभावनाऽऽश्रयिका कृतिरिति बोधात्तत्राऽप्येकवाक्यत्वाऽक्षतिः।
एवं च प्रकृतिप्रत्ययार्थयोरिति न्यायाऽविरोधेनैव भाष्यकारोक्तवाक्यता
न्यायनयेऽपि सूपपादेत्यलं परमताऽनुवर्णनेन। फलितमाह। इत्थञ्चेति। आ-
ख्याताऽर्थकर्त्तृप्रकारकबोधं प्रति धात्वर्थभावनोपस्थितेस्तादृशकर्मप्रका-
रकबोधे तादृशफलोपस्थितेर्हेतुतेत्यर्थः । भावनेत्यस्य वर्त्तमानेत्यादिः ।
कर्माऽऽख्याते भावनाविशेष्यकबोधोपवर्णनं तु प्राचामनुरोधेन । नव्यास्तु
कर्मकृतिफलविशेष्यबोधस्य दृष्टत्वेन कर्माऽऽख्यातेऽपि तद्विशेष्यकबोध एव
न्याय्यः। एवं च प्रत्ययार्थं साक्षात्प्रत्ययार्थविशेष्यान्वयित्वमिति व्युत्पत्ति
रपि न विरुध्यते। अत एवेष्यते पुत्र इत्यर्थे पुत्रीयतीति न भिन्नार्थक-
त्वात्। किं तु पुत्रमिच्छतीत्यर्थ एवेति सुप आत्मनइति सूत्रे भाष्ये उक्त-
म्। अन्यथोभयत्राऽपि व्यापारविशेष्यकबोधेन भिन्नार्थकत्वकथनाऽसङ्ग-
तिः। अस्मन्मते त्वेकत्र व्यापारो विशेष्योऽन्यत्रेच्छारूपं फलमिति भिन्ना
र्थकत्वं स्पष्टमेव। क्यजन्तात्तु कर्मणि प्रत्ययो दुर्लभोऽकर्मकत्वात्। उक्तं
च कैयटेन। यदा क्रियाफलस्य प्राधान्यं तदा वाक्यमेवेष्यते पुत्रो न तु
क्यजन्तात्तस्याऽकर्मकत्वात्कर्मणिप्रत्ययाऽनुत्पादादिति। इत्थं च भावना
जन्यैकाश्रयिका वर्त्तमाना विक्लित्तिरिति बोध इत्याहुः। भावाऽऽख्याते
तु भावनैव विशेष्या तथैवाऽनुभवात्। तिङ्त्वनुवादक एव किं तु लट्-
त्वादिना कालार्थकः सङ्ख्या तु न तदर्थः कर्त्रादिरूपाऽर्थोपस्थित्याऽऽक्ष-
काहेत्वभावेनैव तदर्थसङ्ख्याया अन्वयाऽसम्भवात्। किं तु न केवलेत्यादि-
न्यायेन साधुत्वार्थमेकवचनमेव एकवचनमुत्सर्गतः करिष्यत इति सिद्धा-

स्यात्। काले युक्ताभिसरणे मुह्यन्ति मृगमोहिकाः। उच्छ्वासिकाः समा-
श्यन्ते शय्यन्ते हतशायिका। इत्यत्र बहुवचनं तु भाष्यकारप्रयोगादेवेति
प्राञ्चः। नव्यास्तु एकवचनस्यौत्सर्गिकत्वं सत्येव गमके यथाऽव्ययात्त-
दुत्पत्तावव्ययादाप्सुप इति। अत एव स्वाविति सूत्राऽभावे ति-
ङन्तेभ्यस्तदुत्पत्तिमाशङ्क्य तिङा सङ्ख्याया उक्तत्वान्नेति परिहृतं भाष्ये।
त्वदुक्तरीत्या तिङा कारकगतायास्तस्या उक्तत्वेपि प्रकृत्यर्थगतायास्त-
स्या अनुक्ततयौत्सर्गिकतया वैकवचनस्याप्यवारणत्वेन तदसङ्गतिः स्प-
ष्टैव। द्व्येकयोरित्यादेर्लःकर्मणीत्यनेनैकवाक्यतयाऽपि लकाराः कर्मादौ
भवन्ति तेषां स्थाने चैकत्वादौ तिबादयो भवन्तीत्याकारैव। नहि तत्र
द्वितीयं कर्मणीत्याद्यस्ति येन सङ्ख्यायाः कारकविशेषणता प्रतीयेत। आ-
वृत्तौ च न मानम्। तस्मात्सर्वत्र सङ्ख्यायाः प्रकृत्यर्थ एवाऽन्वयः कस्यैक-
त्वादावित्याकाङ्क्षायामुपस्थितत्वात्प्रकृत्यर्थोऽन्वयस्यैवोचितत्वात्। कर्म-
णीत्यादेरपि विधेयं प्रति विशेषणत्वेन गुणानां च परार्थत्वादिति न्याये-
न सङ्ख्यायामसम्बन्धात्। कर्मणीत्यादेः कस्य कर्मणीत्याऽऽकाङ्क्षासत्त्वेन
तत्र धात्वर्थान्वयस्य क्लृप्तत्वात्। क्रियायामप्येकत्वमस्त्वत एकाक्रियेति
रूपसूत्रभाष्यात्। एवं च तस्य प्रकृत्यर्थेऽन्वयादेकवचनम्। द्वित्वादिकं
तु स्वोत्तरतिङ्वाच्यकारकगतं तत्रारोप्य कर्तृकर्मकेषु तिङ्क्षु द्विवचना-
दिसिद्धिः। अत एव न साधने द्वित्वादिसंशयः साधनज्ञाननिमित्तत्वात्।
अनेकः पचतीत्याद्यनुरोधेन साधनेऽपि सङ्ख्यारोपस्य तवाऽपि वाच्यत्वात्
तस्याऽप्यऽन्वयः प्रकृत्यर्थ एव। प्रकृते हतशायिकाः शय्यन्ते इत्यादौ हत
शयनसदृशानीत्येक उपमाने बहुत्वोपपादनसामर्थ्यं नोपमेये तिङन्तार्थ
क्रियारूपे उपमानगतबहुत्वारोपेण बहुवचनम्। तिङ्वाच्यकारकगताया
एवारोपो नाऽन्यगताया इत्यत्र धात्वर्थशक्तिस्वभाव एव बीजम्। अत
एव भावे द्विवचनादि। तदुक्तम्। एकत्वेऽपि क्रियाऽऽख्याते साधनाश्रयस-
ङ्ख्यया भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रय इति। एवं चाख्या-

तार्थप्रकारकबोधे धातुजन्योपस्थितिः कारणमित्येक एव कार्यकारण-
भाव इति लाघवम् । प्रत्ययानामिति व्युत्पत्तिपरिपालनं चेत्याहुः । तद
परे न क्षमन्ते । औत्सर्गिकैकवचनस्य समयपरिपालनार्थकतया तस्य
गमकाऽऽकाङ्क्षाया अभावेन सत्येव गमक इत्युक्तिर्व्यर्था । यदपि गमकत-
या ङ्याप्सूत्रभाष्योपन्यसनं तथैव यतस्तदेव भाष्यम् क्रियायां सङ्ख्यासा-
मान्याभावबोधकम् । तथाहि ङ्याप्सूत्राऽभावे तिङन्तात्सुबुत्पत्तिशङ्का प्रत्य
यार्थकारकसङ्ख्यामादाय प्रकृत्यर्थगतसङ्ख्यामादाय वा वक्तव्या तत्र प्र-
कृत्यर्थस्याऽसत्त्वरूपतया सङ्ख्यान्वयाऽयोगात्कारकगतसङ्ख्यामादायैव प्र-
सक्ता सा तिङोक्तत्वादित्यनेन निराक्रियते समयपरिपालनस्य तिङैव
कृतत्वात्तदप्राप्त्यैव तन्निराकरणस्याऽप्रसक्तेः । एका च क्रियेति भाष्यमपि
न क्रियायामेकत्वं बोधयति किन्तु सङ्ख्यासामान्याऽभावमेव । कथमन्यथा
साधारणैकवचनेनैवोपपत्तौ वचनारम्भसार्थक्यम् । किञ्चोपमाने बहुत्वोप
पादनसामर्थ्येनेति वदता कारके द्वित्वाद्युपपादनसामर्थ्येनेत्यप्युक्तप्रा-
यम् । एवं च इतशायिका इत्यत्रोपमाने बहुत्वोपपादकबहुवचनवत्
प्रकृते कारके कस्यचिद्द्वित्वाद्युपपादनस्याऽभावात्तदारोपाऽसम्भवः । न
च चैत्रमैत्राविति द्विवचनादितस्तदवगतिः । चैत्रो मैत्रश्च पचत इत्यादा
ववगतेः । भावाख्याते स्वोत्तरतिङ्वाच्यकारकाऽप्रसिद्ध्या द्विवचनाऽसम्भवा-
च्च । कस्यैकत्व इत्याकाङ्क्षाया योग्यसम्बन्धिन्या एवौचित्यात् । क्रियाया
असत्त्वेन परिच्छेदकाकाङ्क्षाया एवाऽसम्भवेन तत्र तदन्वयोक्तेः पराहत-
त्वाच्च । कारके सङ्ख्यान्वये तु प्रतीतिरेव मानमिति तदनुपपत्तेरिव क-
र्मणीत्यादिपदानुवृत्तौ मानत्वात् । उक्तवाक्यपदीयस्याऽप्याऽऽख्यातार्थ-
क्रियाया एकत्वेऽपि सङ्ख्यासामान्याऽभाववत्त्वेऽपि कल्पितात्कर्मादिबाहु-
ल्येन सा नानेव प्रतीयते इत्यर्थान्न तद्विरोधोऽपि ततः शब्दमर्यादया
धात्वर्थे तिङर्थसङ्ख्याऽन्वय इत्यर्थस्याऽलाभाच्च । गुणानां च परार्थत्वा
दिति तु सति प्रकृत्यर्थस्य योग्यत्व एव । अत एव कैयटा

देवदत्तादिपदप्रयोगेत्वाख्यातार्थकर्त्रादिभिः तदर्थस्याऽभेदान्वयः घटो नश्यतीत्यत्र घटाऽभिन्नाऽऽश्रयको नाशाऽनुकूलो व्यापार इति बोधः स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् । अत एव तस्यां सत्यां नश्यति तदत्यये नष्टः तद्भाविते नंक्ष्यतीति प्रयोगाः । देवदत्तो जानातीच्छतीत्यादौ देवदत्ताभिन्नाऽऽश्रयको ज्ञानेच्छाद्यनुकूलो वर्त्तमानो व्यापार इतिबोधः सचान्तत आश्रयतैवेतिरीत्योह्यम् ॥ २ ॥

दिभिस्तिङर्थसङ्ख्यायाः कारक एवाऽन्वयः स्वीकृतः । एवं च भाष्यकारप्रयोगादन्यत्र भावाख्याते द्विवचनाद्यसाध्वेवेति ॥ आख्यातार्थकर्त्रादिभिरिति । समानविभक्तिकयोरेवाऽभेदाऽन्वय इति नियमस्य प्रागेवदूषितत्वादिति भावः । अकर्मकस्थलेऽपि फलव्यापारोभयार्थकत्वं धातोरन्यैरपि स्वीकार्य्यमिति सूचयञ्छाब्दबोधप्रकारमाह । घटोनश्यतीति । तद्व्यापराऽऽकाङ्क्षाया माह । सचेति ।प्रतियोगित्वेति । प्रतियोगित्ववैशिष्ट्यं तु निरूपकतासम्बन्धेन बोध्यम् । तत्समवधानमेव तदनुकूलो व्यापार इत्यर्थः । अतएवेति । यतो नाशमात्रं नार्थः किं तु प्रतियोगित्वविशिष्टनाशसामग्रीरूपो व्यापारोऽयत एवेत्यर्थः । फलव्यापारयोरैकाधिकरण्याच्च न सकर्मकत्वम् । एतदर्थमेव प्रतियोगित्वविशिष्टे त्युपात्तम् । यन्मते नाशमात्रं न धातोरर्थस्तन्मते नाशोत्पत्त्यनन्तरं नाशस्य सदैव सत्त्वान्नश्यतीति प्रयोगाऽपत्तिस्तस्य ध्वंसाऽप्रतियोगित्वाच्च नष्ट इति प्रयोगाऽनुपपत्तिरिति सूचनाय तस्यां सत्यामित्यादिना त्रैकालिकप्रयोगप्रद-

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे पचतीत्यत्रोभयबोधापत्तिः कर्तृमात्रबोधवत् कर्ममात्रस्याऽपि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह ।

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ॥
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याऽऽश्रयाऽन्वयम् ३

तङादयः फले आश्रयाऽन्वयं द्योतयन्ति फलान्वय्याश्रयस्य कर्मत्वात् तद्द्योतकाः कर्मद्योतकाः व्यापाराऽन्वय्याश्रयस्य कर्तृत्वात्तद्द्योतकाः कर्तृद्योतका इति समुदायार्थः द्योतयन्ति तात्पर्य्यं ग्राहयन्ति ॥३॥ नन्वेवं क्रमादमुना रुद इत्यबोधि स इत्यादौ पच्यते ओदनः स्वयमेवेत्यादौ च व्यभिचारः ॥

र्शनम् । नैयायिकमतं तु लुङर्थनिरूपणे वक्ष्यते । जानात्यादिसविषयार्थकानां ज्ञानाद्यतिरिक्तव्यापाराद्यर्थकत्वाऽनभ्युपगमे सकर्मत्वाऽनुपपत्तिं सूचयन् स्वमते शाब्दबोधं दर्शयति । देवदत्तोजानातीत्यादि । आदिपदग्राह्याऽर्थमाह । इच्छादीति । क्वचिज्जानानीत्यादावित्येव पाठः । सचेति । ज्ञानानुकूलो व्यापारश्चेत्यर्थः । तदन्वेषणायात्मगमनःसंयोगस्यैव सुलभत्वादाह । अन्ततइति । तदनुपस्थितावित्यर्थः । आश्रयतैवेति । तत्रा अनवयवेत्वेऽपि साऽवयवत्वारोपाऽव्यापारत्वं निर्बाह्यमिति भावः॥२॥ उपोद्घातसङ्गत्या शबादीनां द्योतकतां निरूपयितु माह । नन्विति । ननु सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति व्युत्पत्तेर्नैकदार्थद्वयबोधोऽत आह । कर्त्तृमात्रबोधवदिति । मात्रशब्दोऽवधारणे । तात्पर्य्येति । त-

कर्मणः कर्त्तृत्वविवक्षायां कर्त्तरि लकारे सति "कर्मवत् कर्म्मणा तुल्यक्रियः" इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्त्तुरेव बोधाद्व्यापारे एवाश्रयान्वयाच्च अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ् तस्य दीपजने तिचिण् चिणोलुगिति तस्य लुक् इति साधनादित्याशङ्कायामाह।

उत्सर्गोऽयं कर्म्मकर्तृविषयादौ विपर्य्ययात्।
तस्मादर्थोचितं ज्ञेयं द्योतकत्वं यथागमम्॥४॥

(कर्म्मकर्तृविषयादौ) पच्यते ओदनः स्वयमेवेत्यादौ अत्र ह्योकौदनाभिन्नाश्रयकः पाकानुकूलोव्यापार इति बोधः।

त्तदर्थ प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यग्रहजनकमित्यर्थः। अत एव कर्त्तरि शबित्यादौ कर्त्रादिग्रहणं सार्थकमन्यथा लःकर्मणीतिरतद्विहितलादेशैरेव कर्त्रादिबोधेनान्यलभ्यत्वात्तद्वैयर्थ्यं स्पष्टमेवेति भावः। मूले। फलव्यापारयोस्तत्रेति। तत्रेति धातूपस्थाप्ययोरित्यर्थः। फलव्यापारयोरिति निर्द्धारणे सप्तमीत्याशयेन व्याचष्टे सारे। फलइति॥३॥व्यभिचारइति। यगादीनामन्वये शब्दादीनां व्यतिरेके चेत्यर्थः। यगादिसत्त्वेऽपि फले आश्रयाऽन्वयाऽबोधाच्छब्दाद्यभावेऽपि व्यापारे तिङर्थे आश्रयान्वयात्तदेवोपपादयति॥ कर्मणः कर्त्तृत्वविवक्षायामित्यादि। सौकर्य्यातिशयद्योतनार्थं च तद्विवक्षा तण्डुलादिगताग्निसंयोगादिरूपव्यापारस्यैव फलजनकतया धात्वर्थत्वविवक्षायामित्यर्थः। वस्तुतस्तु फलस्याऽपि जनकव्यापारगतपौर्वापर्य्यारोपेण व्यापारत्वेन भानादिति पूर्वमुक्तत्वात्तण्डुलगतफलस्यैव व्यापारत्वेन विवक्षायामित्यर्थः। साधनादिति। तथाच व्यभिचारान्नतङादीनां द्योतकतेति भावः।

क्रमादित्यादिपदग्राह्यम् अत्र सामान्यविशेषज्ञान
पूर्वकएकनारदविषयकज्ञानानुकूलः कृष्णाभिन्नाश्र
यकोऽतीतोव्यापारइति बोधः । (यथोचितमिति)
सकर्म्मकधातुसमभिव्याहृतभावसाधारणविधिविधे-
यचिण्यगादि कर्म्मद्योतकमिति भावः ॥ ४ ॥

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमु-
पवर्ण्य (फलव्यापारयोरिति) प्रतिज्ञातं धातोर्व्या-
पारवाचित्वं लडाद्यन्ते भावनाया अवाच्यत्वं
वदतः प्राभाकरादीन् प्रति व्यवस्थापयति ।

क्रमादित्यादीति। कर्मकर्त्तृविषयादाविति मूलस्थादिपदेनेत्यर्थः। सामान्ये
त्यादि क्रमादित्यस्य विवरणम्। सविषयधात्वर्थनिरूपितकर्मत्वस्य विषयत्वे
पर्य्यवसानमित्यभिप्रेत्याह ।विषयकेति । सकर्मकधातुसमभिव्याहृतयगा-
दीनां कर्मद्योतकत्वादाह ।सकर्मकेति। पच्यते तण्डुलः स्वयमेवेत्यादौ यगा
दि तु न तथा किंत्वातिदेशिकम् । कर्मवत्कर्मणेति विहितातिदेशे कार्य्या
तिदेशत्वस्याऽऽकरे सिद्धान्तितत्वान्न तत्रव्यभिचार इति भावः भावसाधा
रणेति।भावकर्मणोः सार्वधातुके यगित्यादिविहितेत्यर्थः । तेन दीपजने-
त्यादिविहितव्यावृत्तिः ॥ ४ ॥ एवमिति । उक्तप्रकारेणेत्यर्थः। ननु फलव्या-
पारयोरित्यनेन सामान्यतो धातोः फलव्यापारवाचकत्वप्रतिज्ञातस्योत्तर
क्षणे एवोपपत्तिभिस्तद्व्यवस्थापनं कर्त्तुमुचितं न तु वाक्यार्थनिरूपणान-
न्तरं तेन जिज्ञासाविच्छेदादित्याशङ्कायामाह । सूचीकटाहन्यायेनेति ।
तथा च सामान्यतः फलव्यापारयोर्धात्वर्थत्वे आश्रयस्य तिङर्थत्वे च
ज्ञाते निरसनीयस्वबादिविप्रतिपत्तिकत्वेन सुप्रतिपाद्यतया च प्रथमं
वाक्यार्थ एव शिष्यजिज्ञासोदयात् एष एवाऽऽदौ निरूपितो न तु धात्व-

व्यापारोभावना सैवोत्पादना सैव च क्रिया।
कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥८॥

पचति पाकमुत्पादयति पाकानुकूला भावना तादृश्युत्पादनेतिविवरणाद्विव्रियमाणस्यापि तद्वाचकतेति भावः। व्यापारपदं च फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितु

र्थो निरसनीयवस्तुवादिविप्रतिपत्तिकत्त्वे नातिदुरूहतया च तस्य पूर्वमजिज्ञासितत्वादिति भावः। लडाद्यन्त इत्यतद्गुणसंविज्ञानबहुव्रीहिणा धातुपरम्। तथा च यजेत पचतेत्यादौ यज्यादावित्यर्थः। अवाच्यत्वम्। वाच्यतानिरूपकत्वाऽभावम्। प्राभाकरादीनित्यादिना नैयायिकसंग्रहः। यद्यपि व्यापारो धात्वर्थत्वेन नैयायिकसम्मतस्तथापि नाऽसौ तन्मते भावनापदव्यपदेश्य इति भावः। व्यापारो भावना सैवेत्यादि पूर्वार्द्धस्य यो गुणभूतैरवयवैरित्याद्युक्तलक्षणलक्षितोर्थस्तद्वाचकव्यापारपदं भावनादिपदैर्विव्रियते विव्रियमाणस्य विवरणसमानार्थकत्वेन धातोर्भावनावाचकत्वसिद्धिरित्यर्थः। तत्रोद्देश्यविधेययोरैक्यमापादयतः सर्वनाम्नः पर्यायेणान्यतरलिङ्गकत्वस्य शैत्यं हि यत्सा प्रकृति र्जलस्य तत्रादिवस्तुषु स्थलेषु दर्शनात्तत्र सेति स्त्रीलिङ्गनिर्देशानुपपत्तिः पुल्लिङ्गत्वेऽपि सोचिलोपेचेदिति लोपेन साधुत्वाच्च भावनैव वाऽस्तु तत्पदपरामृष्या। ननु सम्भवेदेवं धातोर्व्यापारार्थकत्वे तत्र च किं मानमित्याशङ्क्य क्रमा धातुविवरणे मानं दर्शयति। सारे। पचतिपाकमुत्पादयतीति। ननु या क्रिया भावना सैवोत्पादनाऽपि च सा स्मृतेत्युक्तौ ऽपि क्रियाया भावनात्वलाभे किमिति व्यापारपदोपादानमत आह। व्यापारपदञ्चेति। तथा च व्याप्रियतेऽनेनेतिकरणव्युत्पत्त्या न भावव्युत्पत्त्या वा व्यापारपदेन फलानुकूलया-

मुक्तम्। अत एव पचतीत्यत्राधः सन्तापनत्वफूत्कारत्वचुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः। नचैवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम्। रथो गच्छति जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः सध्वी, शक्यतावच्छेदकत्वस्यापि

वतामधिश्रयणादीनां भावनात्वलाभः क्रियापदेन तु कृतिपदवद्यत्नमात्रार्थकेनोक्तविवरणात्कृतेरेव भावनात्वलाभः स्यादिति तदुपात्तमिति भावः। अतएवेति। तत्तद्रूपेण फूत्कारत्वादीनां धातुवाच्यत्वादेवेत्यर्थः। सर्वसिद्धइति। पचतीत्युक्ते फूत्कारादिमात्रवेति सन्देहाऽनुदयादिति भावः। यद्रीत्या नैयायिकैः कृतित्वस्याऽऽख्यातवाच्यत्वं व्यवस्थापितं तद्रीत्यैव धातोः कृतित्वं शक्यतावच्छेदकं भविष्यतीति तटस्थाऽऽशङ्कां निराकरोति। नचैवमेषामित्यादि। नचेति साध्वीत्यनेनान्वितम्। एषाम्। अधिश्रयणत्वादीनाम्। गौरवेति। धातुवाच्यत्वावच्छेदकत्वे गौरवापत्त्येत्यर्थः। तेषां कृतित्वापेक्षया गुरुत्वान्नानात्वाच्चेति भावः। तदवच्छेदकमिति। धातुवाच्यतावच्छेदकमित्यर्थः। ननु कृतेरेव धात्वर्थत्वे रथादावचेतने तद्बाधात्तादृशप्रयोगाऽनुपपत्तिरत आह। रथोगच्छतीत्यादि। व्यापारादीत्यादिनाऽन्वयत्वपरिग्रहः। नैयायिकरीतिरिति। आख्यातार्थविचारे हि तैर्व्यापारे लक्षणां स्वीकृत्याऽयं प्रयोगः समर्थितस्तद्वन्मयाऽपि समर्थनीय इत्यभिप्रेत्य रीतिपदोपादानं न त्वन्यांऽशे तन्मताऽऽदर इति भावः। लाघवोपष्टम्भमानादेवाऽर्थसिद्धिर्न केवलाल्लाघवादित्याशयेन तद्रीतेरेवाऽसाधुत्वमाविष्करोति। शक्यतावच्छेदकत्वस्येति। तथा च शक्तिर्गुरुणाऽपि धर्मेणावच्छिद्यतेऽसतिवा धर्मे कृतित्वाल्लक्षणादित्यनुमा

**लक्ष्यतावच्छेदकत्ववद् गुरुणि सम्भवात् तयोर्वैषम्ये बीजाभावात्। न च पचति पाकं करोतीति यत्नार्थककरोतिना विवरणाद्यत्नएवार्थ इति वाच्यम्। रथोगमनं करोति बीजादिना अङ्कुरः**

नात्तेषु शक्तिः सेत्स्यतीति भावः। ननु तेषां जातित्वाऽपेक्षया गुरुत्वमेव बाधकमत आह। तयोरिति। शक्यतावच्छेदकत्वलक्ष्यतावच्छेदकत्वयोरित्यर्थः। बीजाभावादिति। असम्भवति समनियते लघौ धर्मे गुरौ तदभावादित्यस्य प्रकृतेऽनवतारेण यद्यवच्छेदकत्वं स्वरूपसम्बन्धविशेषस्तदा तत्स्वरूपत्वं गुरूणामप्यक्षतम्। अथातिरिक्तं तदा गुरुधर्मेऽपि तत्स्वीकार आवश्यकः। गङ्गातीरत्वं लक्ष्यतावच्छेदकमिति व्यवहारात्। इत्थंवच्छेदककोटिप्रविष्टत्वस्योभयत्र साम्याच्च। तत्र न्यूनाऽतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वमादाय तादृशव्यवहारो यदि तदा सर्वत्रैव तथास्त्विति भावः। ननु लाघवादेव न तस्याऽवच्छेदकत्वं वदामः किन्तु मानादपीत्याशङ्कते। नचेति। यत्नार्थककरोतिनेत्युक्त्या व्यापारजन्यत्वप्रतिसन्धानाऽविशेषेऽपि घटाङ्कुरयोः कृताऽकृतव्यवहारात्कृञोयत्नार्थकत्वं सिद्धमेवेति ध्वनयति। विवरणादिति। तदर्थप्रतिपादनरूपादित्यर्थः। धातुमात्रं यत्नत्वविशिष्टे शक्तं बाधकं विना यत्नत्वविशिष्टाऽर्थककरोतिप्रतिपादिताऽर्थकत्वाद् यद्विशिष्टबोधकपदप्रतिपादितार्थकं भवति तत्तत्रशक्तं घटत्वविशिष्टशक्तघटपदप्रतिपादितार्थककलशादिपदवत् इति सामान्यतो दृष्टाऽनुमानविधया शक्तिग्राहकत्वाद्विवरणस्येति भावः। यत्न एवार्थ इति पाठः। आख्यातार्थ इति पाठस्तु प्रकृतसन्दर्भविरुद्धः। अर्थः। धात्वर्थः एवकारेण व्यापारस्य वाच्यत्वव्यवच्छेदः कृञो यत्नार्थकत्वे एव धातुमात्रस्य तदर्थकत्वसम्भावना तदेव गगनकुसुमोपमानमित्याह। रथोगमनंकरोतीत्यादि। रथादावचेतने यत्नस्य बाधेन तादृश-

**कृत इति दर्शनात् कृञो यत्नार्थकताया असिद्धेः । किञ्च भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीया स्यात्। न चात्र घटस्य**

प्रयोगाऽनुपपत्त्या न कृञो यत्नार्थकत्वमपितु व्यापारार्थकत्वमेवेति तेन विवरणाद्धातोर्व्यापारार्थकत्वमेव सिध्यतीति भावः । ननु रथो गच्छतीति प्रयोगस्य धात्वर्थप्रतिपादककृञो व्यापारे लाक्षणिकत्वान्न तेन यत्नार्थकत्वक्षतिरत आह । बीजादिनेति । तथा च कृञो व्यापारे प्रयोगप्राचुर्य्येण तत्रैव शक्तिर्न्याय्येति तेन विवरणाद्धातोर्व्यापारार्थकत्वमवश्यमङ्गीकरणीयमिति भावः । अत्रेदमवधेयम् । पचत्यादेः फूत्कारादिव्यापारे व्यापारत्वेनैव शक्तिः व्यापारसामान्यार्थककृञा विवरणात्। एवं च व्यापारत्वेन कृतेरपि संग्राहान्मत्तो भूतं न तु मया कृतमित्युपपद्यते इति-तत्र तत्रोक्तं सङ्गच्छते । तत्तद्रूपेण क्वचिद्बोधस्तु पचत्यादीनां तत्तद्रूपावच्छिन्ने लक्षणयोपपाद्यः । शक्यादन्येन रूपेण ज्ञाने भवति लक्षणेत्यभियुक्तोक्तेः । अत एव वाक्यार्थप्रदर्शनाऽवसरे विक्लित्त्यनुकूलो व्यापारः ज्ञानाऽनुकूलो व्यापारसामान्याऽर्थकव्यापारपदेन स्वोक्तीर्ति तस्य सङ्गतिरिति कृञोऽकर्मकतापत्तेरिति मूलमवतारयति । किञ्चेति । अवाच्यत्वे । धात्वशक्यत्वे । द्वितीया स्यादिति । धात्वर्थोत्पत्तिरूपफलाऽऽश्रयत्वात् ननु घटो भवतीत्यत्र कृत्याऽऽश्रयत्वरूपकर्त्तृत्वबाधेपि धात्वर्थफलाऽन्विताऽऽख्यातार्थव्यापाराश्रयत्व रूपकर्त्तृत्वसत्त्वात्तेन कर्मत्वस्याऽवश्यंबाधेन नोक्तस्थले द्वितीयाप्रसक्तिरन्यथा कर्त्तरि लकारोऽप्यनाकारतामापद्येतेत्यत्राशङ्क्य निराकुरुते । नचेति। घटस्येति । घटं भावयतीत्यत्रेव घटो भवतीत्यत्राऽपि द्वितीयाऽऽपत्तिः । मन्मते तु धातूपात्तव्यापाराऽऽश्रयत्वेन परया कर्त्तृसंज्ञया कर्मसंज्ञाया बाधान्न तदापत्तिरिति भावः । निराकरणप्रकारतामाह । अनुगतेति । चेतनाऽचेतन

कर्तृत्वेन तत्संज्ञया कर्म्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम्। अनुगतकर्तृत्वस्य त्वन्मते दुर्वचनत्वेन घटस्याऽकर्तृत्वात्। कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्। धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्। अपि च भावनाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात्। स्वार्थफलव्यधिकरणव्यापारवाचकत्वम् स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्म्मकत्वं भावनाया वाच्य-

साधारणेत्यर्थः। त्वन्मते। भवदीयमते। दुर्वचत्वेनेति। वक्तुमशक्यत्वेनेत्यर्थः। तदेवाऽऽह। कृत्याश्रयत्वस्येति। तस्याऽचेतनेऽव्याप्तत्वादिति भावः। कारकचक्रप्रयोक्तृत्वस्येवेति। तद्धात्वर्थीयनिखिलकारकप्रवर्त्तकत्वरूपस्य चेत्यर्थः। नैयायिकमतं निरस्य मीमांसकं प्रत्याऽऽह। धात्वर्थेति। कारकमात्रेति। मात्रपदं कात्स्न्यार्थकं सर्वस्यापि कारकस्य धात्वर्थानुकूलयत्किञ्चित्क्रियाश्रयत्वात् क्रियाजनकस्यैव कारकत्वादिति भावः। नन्वचेतने कृत्याऽऽश्रयत्वरूपकर्त्तृत्वस्य बाधेऽपीतरव्यापाराऽनधीनत्वप्रकारकविवक्षाया विषयव्यापाराश्रयत्वरूपकारकचक्रप्रयोक्तृत्वरूपमेव तत्कर्त्तृसंज्ञानियामकम्। व्यापारस्य क्वचित्कृतिः। क्वचित्संयोगादिरेव तादृशव्यापाराश्रय एव स्वतन्त्रः कर्त्तेति सूत्रे स्वतन्त्रपदार्थः तत्सूत्रप्रणयनसामर्थ्यात्। तदुक्तं कारक इति सूत्रे भाष्ये। प्रधानेन समवाये स्थाली परतन्त्रा व्यवाये परतन्त्रा किं पुनः प्रधानं कर्त्ता कथं ज्ञायते कर्त्ता प्रधानमिति यत्सर्वेषु कारकेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवती-

त्वमन्तरेणासम्भवि । अन्यतमत्वं तत्त्वमिति चेन्न एकस्यैवार्थभेदेनाकर्म्मकत्वसकर्म्मकत्वदर्शनात् तदेतदभिसन्धायाह (कृञ) इति । अयं भावः व्यापारावाच्यत्वपक्षे फलमात्रमर्थइति फलितम् । तथा

ति स्थाली काष्ठैः पचतीत्यादौ स्थाल्येव तत्त्वेन विवक्षितेति तद्भावः । वक्ष्यते वाऽधिकमुपरिष्टात् । मीमांसकमते प्रसक्तदूषणोद्धृतिरपि वक्ष्यमाणैव । एवं च घटगततादृशव्यापारस्यैव स्वातन्त्र्यविवक्षया कर्तृत्वस्य निराबाधेन न द्वितीयाप्रसङ्गोऽत आह । अपिचेति । स्वार्थं फलेति । शक्यतावच्छेदककोट्यप्रविष्टाऽऽश्रयकत्वेन फलस्य विशेषणान्न जीवत्यादावति प्रसङ्गः । एवमविवक्षितकर्मकत्वाऽभाववत्त्वेनाऽपि स्वार्थो विशेषणीयो नाऽतो विवक्षितकर्मतयाऽभ्युपगतलकारप्रकृतिस्तुधातौ सः । वैयधिकरण्यं त्वग्रे विवेचयिष्यते । असम्भवीति । तथा च व्यापारवाचकत्वं धातोरावश्यकमिति भावः । अन्यतमत्वमिति । पच्यादिधातून् शृङ्गग्राहिकयोपादाय तावद्भिन्नभिन्नत्वमित्यर्थः । तत्त्वमिति । अनुगतं सकर्मकत्वमित्यर्थः । दर्शनादिति । यथा जयति 'धातोरभिभवार्थेऽकर्मकत्वस्य न्यूनीकरणार्थे सकर्मकत्वस्याभ्युपगमात्सकर्मकधातुलक्षणे तत्प्रवेशेऽकर्मके तस्मिन्नतिव्याप्तेरप्रवेशे च न्यूनीकरणेऽर्थे तत्रैवाऽव्याप्तिरित्यर्थः । यद्यपि तत्तदर्थविशिष्टानेवोक्तरीत्योपादाय सकर्मकत्वनिर्वचने दोषाभावस्तथापि बहुलमेतन्निदर्शनमिति स्मरणात्तत्र तत्रावृत्तिकरणाच्च तावद्धातूनां युगपद् ग्रहणाऽसम्भवे तात्पर्यमिति बोध्यम् । तदेतदिति । पूर्वोक्तदूषणगणमित्यर्थः । ननु कृञोऽकर्मकतापत्तेरित्यस्य कृञोयत्नार्थकत्वनिरासप्रतिपादकस्य कथमुक्तार्थाऽभिसन्धायकत्वमित्याशङ्क्याऽभिसन्धानप्रकारं विशदयति । अयम्भावइति । फलमात्रमिति । मात्रपदेन व्यापारव्यवच्छेदः । करोत्या

च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम्। तथा च यती प्रयत्न इतिवत् फलस्थानीययत्नवाचकत्वाविशेषादकर्म्मकतापत्तिः उक्तरीत्या दुर्व्वारेति। तथा च (नहि यत्नः) इत्यत्र फलस्थानीयत्वेनेति शेषः। (कृञः) इति धातुमात्रोपलक्ष-

दावित्यादिना सविषयार्थधातुसंग्रहः। तन्मात्रमिति। यत्नादिरूपविषयिमात्रमित्यर्थः। अकर्मकतापत्तिरिति। उक्तलक्षणाऽऽक्रान्तस्येति भावः। केचित्तु अकर्मकत्वापत्तिरिति विषय्यर्थकत्वाऽभिप्रायेणैव तेषामेव प्रक्रान्तत्वादेवं च न तदप्रसिद्धिरित्याहुः। उक्तरीतिरिति। उक्तप्रायरीत्या सकर्मकधातुभिन्नधातुत्वमित्याकारिकयेत्यर्थः। यथाश्रुते धातोर्व्यापाराऽवाचकत्वे स्वार्थफलसमानाधिकरणव्यापारवाचकत्वरूपाऽकर्मकत्वाऽऽपादनस्याऽसम्भवादुक्तिकत्वापत्तेः। नन्विदानीं धातुमात्रस्यैव व्यापारवाचकत्वस्याऽसिद्धत्वात्सकर्मकप्रतियोग्यप्रसिद्ध्या भवदुक्तार्थापादनस्याऽप्यसम्भवदुक्तिकत्वं समानम्। अन्यतमत्वरूपस्य तु स्वयमेव निराकृतत्वादुक्तपदेन तद्ग्रहणाऽसम्भवादिति चेन्न। नयत्यादिद्विकर्मकाणां संयोगाऽद्यनुकूलाऽजादिनिष्ठक्रियात्मकफलार्थकत्वस्य धातोः फलमात्रार्थकत्ववादिनाऽप्यभ्युपगमादजादिनिष्ठक्रियायाः संयोगरूपफलजनकत्वाल्लोकप्रसिद्धेश्च व्यापारत्वात्तदर्थकधातून् ण्यन्तादिधातूंश्चोपादायैव कथञ्चित्प्रसिद्धिसम्भवादिति। नन्वेतावताऽऽकृञादीनां व्यापाराऽर्थकत्वं सिद्धं न धातुमात्रस्येत्यतः कृञ्पदं धातुमात्रपरतया व्याचष्टे। कृञ इति धातुमात्रोपलक्षणमिति। कृञ्पदं शक्यलक्ष्यसाधारणधातुत्वेनाऽजहत्स्वार्थलक्षणया धातुमात्रबोधकम् तथाच धातुमात्रस्याऽकर्मकतापत्त्या न फलमात्रार्थकता किं तु व्यापाराऽर्थकताऽपीत्यर्थः। अकर्मकतेति।

**णं सर्वेषामप्यकर्म्मकता सकर्म्मकता वा स्यादिति भावः ।**

**अथवा (व्यापारोभावना) इत्यर्थेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन् नैयायिकाभ्युपगतं जानातिकरोत्यादेः केवलज्ञानयत्नादि क्रि**

पूर्वोक्तभिन्नसर्वधातूनां सेत्यर्थः। यदि फलवाचकत्वमेव सकर्मकत्वम् । तदा सर्वेषामविशेषेण सकर्मकतैव स्यादित्याह । सकर्मकतेति । वस्तुतस्तु उक्तयुक्त्या धातोर्व्यापारार्थकत्वसिद्धिस्तदैव स्याद्यदि स्वार्थफलेत्यादि सकर्मकलक्षणम् सकर्मकधातुमात्रसाधारणं स्यात्तदेव न अध्याद्युपसृष्टशीङादिष्वव्याप्तेः तस्माद् भ्वादीनां धातुत्वाऽनापत्तिः मैत्रेण पाचयतीत्यादौ मैत्रादीनां कर्त्तृत्वाऽनुपपत्तिश्च तथा। अत एव निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यत इत्याद्युपपत्तिरिति दिक् । ननु कृञोऽकर्मकतापत्तेरिति ग्रन्थो न मीमांसकमतनिराकरणपरः । तस्य तस्मात्करोतिरित्यादिना निराकरिष्यमाणत्वात् तैः कृञो यत्नार्थकत्वाऽनभ्युपगमाच्च नाऽपि नैयायिकमतनिरासपरः नैयायिकैः फलव्यापारयोरुभयोरपि धातुवाच्यत्वाऽभ्युपगमात् । तदुक्तमाख्यातवाददीधितौ । स्वां वा फलव्यापारौ पृथगेव धात्वर्थाविति धातोः फलाऽवच्छिन्नव्यापारार्थकत्वे कर्माख्याते फलस्य द्वेधा भानाऽऽपत्त्या तयोर्विशकलितयोरेव शक्तिर्ज्यायसीति तद्भावः । फलस्य धातुवाच्यत्वे परं केषाञ्चिन्न्यायविदां विप्रतिपत्तिः कर्माख्यातेन द्वितीयया च तदभानसम्भवात् । किञ्चैतद्ग्रन्थस्य धातुमात्रस्य व्यापाराऽर्थकत्वसाधकत्वे धातोरकर्मतापत्तेः फलमात्राऽर्थता नह्येत्येव ब्रूयान्न तु कृञ इत्यपरितोषादन्यार्थपरतया मूलमवतारयति । अथवेति । प्रसाध्येति । पूर्वाऽर्द्धस्य विवरणपरतया व्याख्यानादिति भावः । तदिति ।

**यामात्रवाचित्वं दूषयति (क्रुञः) इति। अयं भावः फलांशस्यावाच्यत्वे व्यापारएव धात्वर्थः स्यात्।**

धातुवाच्यत्वमित्यर्थः। जानातिकरोत्यादेरिति। निर्दिष्टयत्नार्थकभिन्नसविषयार्थकधातुमात्रोपलक्षणम्। क्रियामात्रेति। मात्रपदेन फलव्यवच्छेदः सकर्मकाणां प्रायशः फलाऽवच्छिन्नव्यापारबोधकत्वं विशकलित फलव्यापारोभयाऽर्थकत्वं वा जानात्यादीनां तु ज्ञानादिव्यापारार्थकत्व मेव अकर्मकाणां सर्वेषां न फलाऽर्थकत्वम् तत्र ततोऽननुभवात् किं तु व्यापाराऽर्थकत्वमेवेति प्राचीननैयायिकाभ्युपगमात् वक्ष्यमाणरीत्या क्रुञः फलार्थकत्वे तु तुल्यन्यायात् सर्वेषामेव तत्सिद्धिरिति भावः। ननु क्रुञः फलाऽवाचकत्वे कथमसकर्मकत्वमत आह। अयम्भावइति॥ वाचकत्वादीत्यादिना स्वार्थव्यापारव्यधिकरणफलवाचकत्वस्य नैयायिकनये फलाऽवच्छिन्नव्यापाराऽर्थकत्वस्याऽपि सकर्मकत्वात्तस्य च सङ्ग्रहः। जानात्यादीनामेव फलार्थकत्वाऽनभ्युपगम उच्छेदपदार्थोऽव्याप्तिः सर्वेषामेव तदनभ्युपगमे त्वसम्भवः। तथा च क्रुञ्धातुः फलवाचकः सकर्मकत्वात् पच्यादिवदित्यनुमाने विपक्षबाधकतर्कप्रदर्शकं क्रुञोऽकर्मकेत्यादीति बोध्यम्। वस्तुतस्तु व्यापारो भावना सैवेति पूर्वार्द्धमेव विवरणप्रतिपादनेन धातोः फलव्यापारोभयार्थत्वसाधकम्। तथाहि धातोर्व्यापारार्थकत्वेऽसिद्धे भावनादिपदैर्व्यापारपदविवरणपरतैव तस्य वाच्या व्याख्यातं च तथैव सारकृता। तथा च व्यापारार्थकत्वेनेव विक्लित्याद्यर्थकपाकादिपदेनाऽपि विवरणादुभयोरपि धात्वर्थत्वसिद्धिः। तत्र जानात्यादौ फलांशे विप्रतिपन्नं नैयायिकं प्रत्युक्तार्थोपष्टम्भकतया क्रुञोऽकर्मकतेत्याद्युक्तम्। धातुमात्रे व्यापाराऽवाचकत्वं वदन्तं मीमांसकं प्रति तु तदुपपादकतयैव तस्मात्करोतिरित्यादि यद्यपि व्यापारांऽशे विप्रतिपन्नं प्रत्यपि क्रुञ इत्याद्युपष्टम्भकम् तथापि विवरणस्यैवाऽऽख्यातपरतया सकर्मकत्व-

स्य व्यापाराद्यर्थकत्वं विनाप्यन्यथासिद्धावुद्भावितायां तद्ग्रन्थस्याऽऽवश्य-
कत्वादिति। नव्यनैयायिकास्तु सकर्मकधातूनां फले तज्जनकत्वेन विव-
क्षितव्यापारेषु चोपलक्षणीभूतसाधनाऽऽकाङ्क्षोत्थापकताऽवच्छेदकधर्म-
समानाऽधिकरणधर्मत्वाऽनुगतीकृततत्तद्धर्माऽवच्छिन्नेषु शक्तिः सम्भवति-
फलजनकतया विवक्षितानां तेषां विभिन्नधर्मवत्त्वम् यत्र त्वेकधर्माऽव-
च्छिन्नस्यैव फलाऽनुकूलत्वं विवक्षाविषयस्तदवच्छिन्न एव धातोः सा नहि
सर्वत्र समुदाय एव शक्तिरिति राजाऽऽज्ञाऽस्ति। क्रियानामेयमित्यादि
भाष्यं तु बहुकालसाध्योक्तधात्वर्थविषयमिति न तद्व्याकोपः। अन्यथा
सर्वत्राऽगतिकगत्याऽऽरोपाऽऽश्रयणाऽऽपत्तेः तेषामेव च व्यापारपदव्यप-
देश्यत्वं कृतित्वस्य तादृशधर्मसमानाधिकरणधर्मत्वेऽपि न तस्य पच्याद्य-
र्थताऽवच्छेदकत्वम्। तदंशे तस्योपलक्षणत्वाऽनङ्गीकारात्। अत एव व्यु-
त्पन्नानां न कदाचिदपि तात्पर्येण यागपाकादिपदप्रयोगस्तथा प्रयुक्ताद-
पि तस्मात्पाकादिकृतिबोधश्च। एतेन तस्या अपि व्यापारतया धातोरेव
लाभान्न तिङस्तत्र शक्तिरिति निरस्तम्। जानात्यादीनां तु विषयत्वं
फलं तन्निर्वाहकज्ञानं हि व्यापारश्च शक्यं कृञस्तु साध्यत्वं यत्नस्याऽर्थः
तेन तद्धात्वर्थफलसम्बन्धित्वरूपं मुख्यकर्मत्वं घटादीनां निराबाधम्। एवं
स्वार्थफलव्यधिकरणत्वरूपं सकर्मकत्वमपि यत्याद्यकर्मकाणां तु तत्तद्धर्मा-
ऽवच्छिन्नयत्नादिरूपव्यापार एव सा भोजनं यतते -इत्यप्रयोगेण तद्विषय-
त्वस्य धातुशक्यत्वाऽनुपगमात्। यतत इत्युक्ते कर्माऽऽकाङ्क्षाया अभा-
वाच्च। अध्याद्युपसृष्टशीङादीनां तु फले लक्षणैव शीङादितः सर्वत्र फला-
ऽबोधात् तदर्थेऽनादितात्पर्यग्राहकतयैव चाऽधिशीङ्स्थासामित्यादि-
सूत्रोपयोगः। कर्तेत्यादौ तु कृञो यत्नबोधकत्वादेव नाऽचेतने स्वरसतः
कर्तृपदप्रयोगः। एवं च कर्तृबोधनिर्वाहाऽर्थं पचतीत्यादावाख्यातस्य
शक्तिरावश्यकी तदंशप्रयत्नस्याऽऽश्रयाऽऽश्रयिभावेन प्रथमान्तार्थेऽन्वया-
त्तद्बोधोपपत्तेः। यत्र तु न तद्बोधसिद्धी रथो गच्छतीत्यादौ तत्र व्यापारे

**तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूप सकर्मकत्वोच्छेदापत्तिः। नच कृञादौ सकर्मकत्व-व्यवहारो भाक्त इति नैयायिकोक्तं युक्तम्। व्यवहारस्य भाक्तत्वेऽपि कर्मणि लकारासम्भवात्।**

आश्रयत्वादौ वा यथायथं लक्षणा। स्वतन्त्रः कर्त्तेति सूत्रसामर्थ्येन धात्वर्थव्यापाराऽऽश्रयाऽप्रतियोगिनामपि कर्त्तृत्वस्य परिभाषणान्न कर्त्तृबोधाऽनुपपत्तिर्यत्र प्रथमान्तसमभिव्याहारः यत्र तु न समभिव्याहारस्तत्र कृत्यादिविशेष्यक एव बोधः अनभिहित इत्यस्याप्यबोधित इत्येवाऽर्थः। अबोधनंत्वाश्रयाऽतिरिक्तार्थे विशेषणतया कृत्या प्रबोधनमेवेति नाऽभिधानाऽनभिधानव्यवस्थाऽनुपपत्तिश्चैत्रः पचतीत्यादौ कर्त्तृबोधस्य कृतिशक्त्यैव निर्वाहे तत्राऽऽख्यातशक्तिकल्पना नौचित्याच्च विक्लित्यादौ व्यापारव्यपदेशाऽभावेन विक्लित्यादीनामुक्तधर्मत्वस्योपलक्षणत्वाऽनुपसंगमात्। पृथक् शक्तिरदुष्टैव फलत्वंतु पूर्वं निरूपितमेव। एवं सति कश्चिद्दूषणं प्रसक्तमवगणयिष्यते इत्याहुः। एवं सकर्मकत्वादिनिर्वचनाऽनुपपत्त्या धातोरुभयार्थकत्वमावश्यकमिति पर्यवसितम्। व्यापारमात्रशक्तिवादिनस्तु द्वितीयाद्यर्थकत्वं सकर्मकत्वम्। पच्यादिसमभिव्याहारे द्वितीयाया विक्लित्याद्यर्थकत्वात्। जानात्यादिसमभिव्याहारे च विषयत्वाऽद्यर्थकत्वात् तदन्वयित्वं तदर्थेऽक्षतमित्याहुः। जानात्यादियोगे घटादीनां गौणकर्मत्वमिति वदतां मतमाशङ्क्य निराचष्टे। नचेति। भाक्तइति। भज्यते आस्वाद्यते सेव्यते वा शक्यार्थोऽनयेति भक्तिर्लक्षणा तथा शक्याऽर्थस्य तिरोधानात्स्वज्ञाने घटकतया शक्याऽर्थस्याऽपेक्षणाच्च तत आगतो भाक्त इत्यर्थः। भाक्तत्वेपि। लक्षणानिबन्धनत्वेऽपि। कर्मणीति। मुख्यसकर्मकत्वमादाय शास्त्रस्य चारितार्थ्यं गौणे तद्व्यापारे मानाऽभावादिति भावः। तत्र लौ-

नहि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम् । एवञ्च (नहि यत्न) इत्यत्र यत्नमात्रमित्यर्थः ॥ ५ ॥

अतएवाह ।

किन्तूत्पादनमेवातः कर्म्मवत्स्यात् यगाद्यपि ।
कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद्दृशेरिव ॥ ६ ॥

(उत्पादनम्) उत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः । फलस्य वाच्यत्वे युक्त्यन्तरमाह (अतः इत्यादि) यतः कृञो यत्नमात्रमर्थो नेष्यते (अतः कर्म्मवत्स्यादिति) पदेन कर्म्मवत् कर्म्मणा तुल्यक्रिय-

किञ्च दृष्टान्तमाह । नहीत्यादि । भाक्तराजपदव्यवहार्य्येण पुरोहितादिना तदीयकार्यप्रवर्त्तनाय्यहङ्कृतश्चन्द्रमा इत्यादावात्ववारणायाऽऽश्रितगौणमुख्यन्यायस्य विशिष्यार्थोपस्थापकविशिष्टरूपोपादानपुरस्सरपदकार्यविषयकत्वस्याऽन्यत्र व्यवस्थापनाच्च नाऽत्र तद्विषयतेत्यन्ये । परेत्वेतच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वमेव सकर्मकत्वम् । सकर्मकपदात्कर्मणासहितत्वार्थकाच्छब्दमर्यादया पूर्वोक्तार्थालाभाच्च लःकर्मणीत्यादौ सकर्मकपदाद्बोधाऽनापत्तेः तदनन्वय्यर्थकत्वमकर्मकत्वम् । अत एवाऽध्यासिता भूमय इत्यादौ कर्मणि क्तोपपत्तिः अन्वयस्य पृथगुपस्थितसंसर्गरूपतया न जीवत्यादिषु दोष इत्याहुः । अयमेव पक्षः फलाऽवच्छिन्नव्यापारबोधकत्वं सकर्मकत्वमिति वदद्भिराश्रितः फलस्य कर्मतायाः सर्वैरेवोपगमात् फलाऽन्वय्यर्थकत्वस्य सकर्मकेषु सत्त्वात् यदि चैकोपस्थितिविषयत्वान्नोक्तः प्रकारः सम्भवतीति विभाव्यतेतदा पृथक् शक्तिवादिमते निर्दुष्ट

इति सूत्रं लक्ष्यते। अयमर्थः यतएवास्योत्पादनार्थ-
कता अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते
घटः स्वयमेवेति यगादयोप्युपपद्यन्ते। अन्यथा
यत्नस्य कर्म्मनिष्ठत्वाभावात्तन्न स्यात् दृशिवत्।
यथा दृश्यते घटः स्वयमेवेति न दर्शनस्य घटावृत्ति
त्वात्तथा यत्नस्यापीति,तथा प्रयोगानापत्तेरिति॥६॥

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयावच्छि
न्नावरणभङ्गादिफलवाचित्वमावश्यकम् अन्यथा स-

त्वमेव अवच्छिन्नपदस्य सम्बन्धपरत्वेन कर्मीभूतफलसम्बन्धिव्यापाराऽर्थ
कत्वस्य सुस्थत्वात् अकर्मकाणां फलार्थत्वाऽनङ्गीकारेणाऽति व्याप्त्यव्याप्त्यो
रनवकाशादित्यवधेयम्। अध्यासिता भूमय इत्यादौ यथोक्तोपपत्तिस्तथो
पपादितं प्राक्॥५॥ननु कर्मवत्स्याद्यगाद्यपीति मूलस्य कर्मवत् यगाद्यपि भ-
वेदित्यर्थो लभ्यते स च बाधितोऽविवक्षितश्चेत्यत आह।कर्मवत्स्यादितिप-
देनेति। सूत्रंलक्ष्यतइति। सूत्रविहितं लक्ष्यते इत्यर्थः। यथाश्रुते कर्मप-
दात् स्वघटितत्वेन लक्षणया सूत्रोपस्थितस्याऽपि तस्य यगादिकमित्यनेना
ऽनन्वयापत्तेः एतद्बोधनायैव स्यादिति लक्ष्यकोटावुपात्तमिति। घटावृत्ति
त्वादिति। घटमात्रवृत्तित्वाभावेन कर्मस्थक्रियकत्वाऽभावादिति तु
परमाऽर्थः॥६॥एवमिति। कर्मवद्भावाऽनुरोधेन करणाऽर्थकरोतेरुत्पत्तिसहित
यत्नाऽर्थकत्वाऽभ्युपगमे इत्यर्थः। जानातत्यादेरपीत्यादिपदाद् गम्यादिप-
रिग्रहः आवरणभङ्गादित्यादिपदेन तु संयोगादेः सः आवश्यकमित्यनेन
तत्र ज्ञानस्यैव फलत्वाऽङ्गीकारे तदनाश्रयत्वाद् घटादेः कर्मत्वानुपपत्ति
रपि सूच्यते आवरणभङ्गस्याऽप्यतीतादौ यथा फलत्वं तथा सार एव सु
बर्थनिर्णये वक्ष्यते। सकर्मकताऽनापत्तेरिति। स्वार्थफलव्यधिकरणता-

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सतीति।

पचति भवति देवदत्तेत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यतासत्त्वात् स्यादेव निघातः। तिङ्ङतिङ इति सूत्रयता तिङन्तानामप्येकवाक्यतास्वीकारात्। एकतिङ् वाक्यमिति वदतां वार्त्तिककाराणां मते परं

स्योद्देश्यकप्रवर्त्तनाविषयत्वरूपपरम्परासम्बन्धेनेत्यर्थः। व्रजानीत्यस्य हि जानीहीति शेषः। सिद्धस्याऽभिमुखीभावमात्रं सम्बोधनं विदुः प्राप्ताऽभिमुख्यो हि जनः क्रियासु विनियुज्यत इति कारिकान्तरे विनियुज्यत इति वदता प्रवर्त्तनाविषयक्रियायामेव तदन्वयबोधनात्। प्रवर्त्तनोद्देश्यस्यैव तद्विषयक्रियोद्देश्यत्वादुद्देश्यविधेयभावस्य तयोः संसर्गमर्यादया लाभादेकवाक्यतया निघात इति तदर्थः। शाब्दबोधस्त्वत्र सम्बोधनविषयदेवदत्तोद्देश्यकप्रवर्त्तनाविषयो मत्कर्त्तृकव्रजनकर्मकं ज्ञानमिति। सूत्रभाष्यादिरीत्येति। भूवादिसमर्थसूत्रस्थभाष्योक्तरीत्येत्यर्थः। स्यादेवेति। आमन्त्रितदेवदत्तपदस्येत्यर्थः। अत्र जानीहीति पदाऽध्याहारेणोक्तरीत्या देवदत्तपदस्यैकवाक्यस्थत्वाऽऽपत्तेरिति भावः। तत्र सूत्रकारसम्मतिमाह। तिङ्ङतिङ इतीति। तिङन्तानामिति बहुवचनेन प्रकृते जानातिपदाऽध्याहारः सूच्यते। अन्यथा तत्र निघाताऽप्राप्त्या तत्पर्युदासबोधकतिङ्ग्रहणस्य वैयर्थ्याऽऽपत्तेरिति भावः। सम्मतिरियं सूत्रकृत एकवाक्यतांशे निघातांशे च। भाष्यसम्मतिस्तु न तेनातिङ्ग्रहणस्य प्रत्याख्यानात्। नन्वेवं कथमतिङ्ग्रहणप्रत्याख्यानसङ्गतिः पचति भवतीत्यत्र निघातवारकतया तस्यावश्यकत्वादिति चेन्न। तत्र कारकान्वितक्रियाबोधकत्वरूपैकवाक्यत्वस्य सुबन्तसुतिङन्तचयसाधारणस्य सत्त्वेऽपि वार्त्तिककार-

न। वस्तुतः एकतिङ्विशेष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम्। (क्त्वोऽर्थाः) क्रियाभ्यावृत्तिगणने कृत्वसुच् इति क्रियायोगे तत्साधुत्वोक्तेः क्रियाया अभ्यावृत्तिः पुनः पुनर्जन्म। तस्मिन्द्योत्ये इति तदर्थात्। (कारकम्) कारके इत्यधिकृत्य तेषां व्युत्पादनात्। कारकशब्दो हि क्रियापरः करोति कर्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः। तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति

परिभाषितैकवाक्यत्वस्य तत्राऽसत्त्वादित्याशयात्। तथा चोक्तस्थले ताद्दृशैकवाक्यत्वाऽभावान्निघाताऽप्रसक्तिरेवैतत्सूचनायैव स्यादेव निघात इति सम्भावनाद्योतकलिङ उपादानम्। तदेतदाविष्करोति। वार्त्तिककाराणामिति। यथाश्रुतसूत्रमनुरुध्याऽऽह। वस्तुतस्त्विति। हेलाराजीयइति। बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता। तिङन्तेभ्यो निघातस्य प्रतिषेधस्तथाऽर्थवानिति वाक्यपदीयव्याख्यानाऽवसर इति शेषः। तन्मतेऽपि भवत्येवेति। इदं च निरुक्तलौकिकवाक्यत्वस्यैव निघातप्रयोजकत्वमित्याशयमूलकमित्यवधेयम्। पुनः पुनर्जन्मेति। अत एव सकृत्पक्त्वा द्विःपचतीति न पक्त्वा भुङ्क्ते इत्यादौ पक्त्वादिशब्दाः सकृदोत्पत्तिपराः तस्मा एव कृत्वसुजादिर्द्योतकः सूत्रस्वारस्याच्च। तद्द्योत्यार्थस्य क्रियायामन्वय इति भावः। क्रियान्वयिनामेव संज्ञा त्वपादानादिसञ्ज्ञम् क्वचित्तथैव

भाष्ये स्पष्टम् (प्रथमोवतिः) तेन तुल्यं क्रिया चेद्वतिरिति विहितः तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात्। (धातुसम्बन्धाधिकारे) धातुसम्बन्धे प्रत्यया इत्यधिकृत्य तेषां विधानात्। (असमस्तनञ्) समासायोग्यः प्रसज्यप्रतिषेधोयोनञित्यर्थः। उत्तरपदार्थान्वयेऽपि समासविकल्पेन पक्षे असमस्तत्वात् यथा

पाठः। स्पष्टमिति। अन्ये तु उत्तरभाष्ये करोति क्रियां निर्वर्त्तयतीति व्युत्पत्तिप्रदर्शनात्कारकत्वम् क्रियाजनकत्वमेव। अत एव ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम् पुत्रेणाऽन्यथासिद्धत्वादत एव तेषां क्रियायामन्वयः क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया अपि जनकाऽऽकाङ्क्षया च तत्रैवाऽन्वयस्यौचित्यात्। अत एव गतिकारकोपपदात्कृदित्यादौ कारकशब्दस्याऽपादानादिपरता सङ्गच्छते। कारक इति तु प्रथमार्थे सप्तमीत्याहुः। इत्युक्तत्वादिति। तथा च ब्राह्मणवदिति वृत्तौ ब्राह्मणशब्दस्य ब्राह्मणकर्तृकाध्ययनपरतया तत्तौल्यवत्यर्थ समभिव्याहृताऽध्ययनक्रियायाम ब्राह्मणकर्तृकाऽध्ययनतुल्यमेककर्तृकमध्ययनमिति ब्राह्मणवदधीत इत्यतो बोधः। तत्र तस्येवेति विहितवतेर्द्रव्यगुणान्वयित्वान्मूले प्रथम इत्युक्तम्। विधानादिति। तच धातुशब्दस्य धात्वर्थपरतया वसन् ददर्शेत्यत्राऽतीतवासकर्तृकर्तृकं दर्शनमित्यादिरीत्या बोधादिति भावः।प्रसज्येति। प्रतिषेधशब्दः कर्मघञन्तो बाहुलकात्। प्रसज्याऽऽपाद्यप्रतिषेधः प्रतियोगी यस्य तादृशाऽभावोऽर्थो यस्येति व्युत्पत्त्याऽभावार्थक इत्यर्थः। यथाश्रुतेति। न ब्राह्मणमानयेत्यादौ नञर्थाऽऽरोपस्य ब्राह्मणादावन्वयेन व्यभिचाराऽऽपत्तेरिति भावः। निषेधप्रतीतेरिति। अत्यन्ताऽभावप्रतीतेरित्यर्थः। तथा च तादृशप्रती-

श्रुतग्रहणायोगात् । न चासमस्तनञः क्रियान्वये मानाभावः न त्वं पचसि न युवां पचथः चैत्रो न पचति घटो न जायते इत्यादौ क्रियाया एव निषेधप्रतीतेः । अत एव विद्यमानेऽपि घटे तादृश प्रयोगः । तथा च घटो नास्तीत्यत्राप्यस्तित्वाभाव एव बोध्यते। नहि घटो न जायते नास्तीत्यनयोर्धात्वर्थभेदमन्तरेणास्ति विशेषः । तथा च भूतले न घट इत्यत्राप्य-

तिरिक्तनञर्थस्य क्रियान्वयित्वे मानमिति भावः । तस्य युष्मदाद्यर्थाऽन्वयित्वे तु युष्मदादौ लकारवाच्यकर्तृवाचकत्वरूपसामानाधिकरण्याऽभावान्मध्यमपुरुषाद्यनुपपत्तिर्युष्मदर्थप्रतियोगिकाऽभावस्यैकत्वेन द्विवचनाद्यनुपपत्तिश्चेति सूचयितुं न त्वं पचसि न युवां पचथ इत्युक्तम् । एवं चैत्रप्रतियोगिकाऽभावकर्तृत्वोपगमे पाके तत्कर्तृकत्वबाधः पाकाऽनुकूलकृत्यभावार्थकत्वे स्वमते पुरुषव्यवस्थाऽपि कदाचिन्मध्यमोत्तमयोरापत्तिश्चेति बोधयितुं चैत्रो न पचतीत्युक्तम् । अतएवेति। नञः क्रियाप्रतियोगिकाऽभावबोधत्वादेवेत्यर्थः। तादृशप्रयोगइति । घटो न जायत इत्याकारक इत्यर्थः । घटस्य विद्यमानतादशायां घटकर्तृकोत्पत्त्यनुकूलव्यापाराऽभावाऽबाधात्स्वमते तु घटाऽभावे उत्पत्त्यनुकूलव्यापारकर्तृत्वाऽभावादुक्तप्रयोगाऽनुपपत्तिरिति भावः । उक्तरीत्या नञः क्रियाप्रतियोगिकाऽभावबोधकत्वध्रौव्ये घटो नास्तीत्यत्र घटाऽभावकर्तृकत्वस्य धात्वर्थेऽबाधेऽपि तद्बोधमनादृत्य घटास्तित्वाऽभावबोधाऽभ्युपगम उचितो वक्ष्यमाणकार्यकारणभावबलादित्याह । तथाचघटइति । तदेवोपपादयति । नहीत्यादिना । ननु यत्र न क्रियावाचकसमभिव्याहारो भूतले न घट इत्यादौ तत्र नञा कथं क्रियाप्रतियोगिकाऽभावो बोध-

स्तीत्यध्याहार्य्यम् । प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात् । शेषं नञर्थनिर्णये वक्ष्यते ॥ १६ ॥

तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमेतकस्यास्य क्रिययैवावधार्य्यताम् ॥१७॥

यस्य च भावेन भावलक्षणम् इत्यत्र भावनार्थक

नीयोऽत आह । तथाचेति । अध्याहार्य्यमिति । अस्तिर्भवन्तीपर इत्यादिभाष्ये क्रियान्तराऽभावेऽप्यस्तिक्रियामादाय वाक्यपरिपूर्त्तिबोधनादिति भावः । प्रकारतासम्बन्धेनेति । नञर्थाऽभावनिष्ठविशेष्यतानिरूपित प्रकारतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वस्य न त्वं पचसीत्याद्यनुरोधेन क्लृप्तत्वादत्राऽपि तद्बोधोपपत्तयेऽस्त्यध्याहार आवश्यक इति भावः । न च त्वं पचतीत्यादाविवाऽत्राऽपि नञः पर्य्युदासद्योतकत्वाऽभ्युपगमाद्युष्मच्छब्दार्थ त्वद्भिन्ने सामानाधिकरण्याऽबाधान्न पुरुषव्यवस्थाऽनुपपत्तिः सङ्ख्यायास्तत्राबाधान्न द्विवचनाऽपपत्तिरपीति तादृशकार्य्यकारणभावस्यैवाऽप्रामाणिकतया कथं तदनुरोधोऽस्त्यध्याहारनियामकः । घटो न जायते इति इत्यादौ प्रसज्यप्रतिषेधाऽर्थकनञ्स्थले तु यथा नाऽनुपपत्तिस्तथा वक्ष्यते ।तथा च भूतले घटो नेत्यादौ भूतलवृत्तिर्घटाऽभाव इति बोधे बाधकाऽभावोऽत आह । शेषमिति । तथा च यदा युष्मदर्थभिन्नकर्त्तृको न पाकस्तदा न त्वं पचसीति प्रयोगाऽनापत्तिः । पर्युदासद्योतकताकादिमतेऽतस्तत्र प्रसज्यप्रतिषेधाऽर्थकत्वमेवाङ्गीकरणीयमित्युक्तयुक्त्या कार्य्यकारणभावस्यावश्यकतेत्यादिशेषपदार्थः । नैयायिकमतमपि तत्रैव व्यक्तीभविष्यति ॥ १६ ॥
साधुत्वाऽऽख्यानलाभादिति । अयम्भावः । यस्यचभावेनभावलक्षणमिति

भावशब्देन तद्योगे साधुत्वाख्यानलाभात् षष्ठी चानादर इति तदग्रिमसूत्रेऽपि चकाराद्भावेनेत्यायातीत्यर्थः (साधुत्वमिति) तत्स्वरूपन्तु वक्ष्यते (क्रियायैवेति) अयं भावः। भूवादिसूत्रादिषु प्रायशः क्रियाशब्देन भावनाव्यपदेशात्तत्र तस्य साङ्केतिकी शक्तिः फलांशे क्वाचित्कः क्रियत इति यौगिकः प्रयोगः

सूत्रेण क्रियाज्ञापकक्रियाश्रयवाचकपदात्सप्तमी विधीयते भावलक्षणमित्युपादानाज्ज्ञापकस्वरूपसप्तम्यर्थस्य क्रियायामेवाऽन्वयः । अत एव गोषु दुह्यमानासु गत इत्यादौ दोहनक्रियाऽऽधारकाले न गमनपरिच्छेदकत्वं बुध्यत इति । आयातीति । समस्तसूत्रमेव तत्राऽनुवर्त्तत इत्यर्थः। तथा चाऽनादरे गम्यमाने यन्निष्ठक्रियायाः क्रियान्तरज्ञापकत्वं तद्वाचकतोति तदर्थात्तद्विहितयोरपि तयोः क्रियायोग एव साधुत्वं लभ्यत इत्यर्थः । ननूक्तानां क्रियाऽन्वयाऽभावेऽपि शक्तत्वरूपसाधुत्वं सुलभमत आह । तत्स्वरूपमिति । साधुत्वस्वरूपमित्यर्थः । वक्ष्यतइति । साधुत्वनिर्वचनाऽवसर इति शेषः । साधुत्वं न शक्तत्वमपशब्दादपि बोधोदयात् किन्तु व्याकरणैकाव्यञ्जिका पुण्यजनकतावच्छेदकजातिरिति वक्ष्यत इत्यर्थः । प्रकृते च व्याकरणेन क्रियान्वितेष्वेव तद्व्यञ्जनस इति तदन्यस्याऽसाधुतैवेति भावः । ननु क्रिययैवाऽवधार्य्यतामितिमूलेन क्रियाऽन्वय एवोक्तानां साधुत्वं लभ्यते इति सत्यमेव तथापि भाष्ये क्रियापदस्य फलेऽपि प्रयोगात्साक्षात्परम्परया वा क्रियाफलाऽन्वयेनाऽपि तेषां साधुत्वोपपत्तौ नोक्तरीतिर्धातोर्व्यापारवाचकत्वसाधिकेत्याशङ्काऽऽशयं प्रकाशयति । अयम्भावइति । प्रायशःक्रियाशब्देनेति । तथा च प्रयोगबाहुल्यं रूढिसद्भावे प्रयोजकमिति भावः । साङ्केतिकीति । सङ्केताभिव्यङ्ग्या रूढि-

तथा च संज्ञाशब्दस्यानपेक्षप्रवृत्तत्वेन बलवत्त्वाद्भाव
नान्वय एव साधुना लभ्यते। अत एव संज्ञाशब्दप्रा-
बल्यात् रथन्तरमुत्तराग्रन्थपठितर्क्ष्वेव गेयम् ननु
वेदे तदुत्तरपठ्यमानर्क्ष्विति नवमे निर्णीतम्। किञ्च
फलांशोऽपि भावनायां विशेषणं कारकाण्यपि क्वचि-
त्तथाभूतानीति। गुणानाञ्च परार्थत्वादसम्बन्धः सम-

रित्यर्थः। तत्त्वहेतुः। क्वाचित्कइति तत्र नियामकमाह। यौगिकइति।
क्रियते व्यापारेण निष्पाद्यत इति व्युत्पत्तेरिति भावः। अनपेक्ष्येति। प्रकृ-
तिप्रत्ययशक्तिमननुसन्धायेत्यर्थः। अतएवेति। संज्ञाशब्दस्याऽनपेक्ष्यप्रवृ-
त्तिकत्वेन बलवत्त्वादेवेत्यर्थः। नवमइति। मीमांसानवमाऽध्याये इत्य-
र्थः। तथाहि रथन्तरं हि यद्योन्यामुत्तरयोर्गायतीति श्रूयते तत्र रथ-
न्तरयोनेः परतो द्वयोर्निपठितत्वाद्रथन्तरं तस्यां गेयमुतोत्तराग्रन्थे न
त्वावामन्यत इत्यस्य पठितत्वात्तत्र गेयमिति संशयेऽविशेषादुभयत्र गेय-
मिति पूर्वपक्षे उत्तराशब्दस्य संज्ञारूपेण प्रसिद्धिर्द्वयोर्नो तु तस्याः पूर्व-
स्याऽपेक्षिकोत्तरत्वबलाद्यौगिकी सेति संज्ञाशब्दस्याऽनपेक्ष्यप्रवृत्तिकत्वे-
बलवत्त्वादुत्तराशब्दसङ्केतितेन त्वावामन्यत इत्यादावृच्येव तद्गेयमिति
नवमे निर्णीतम् तद्वत्तत्रापीति भावः। ननु भावनायां क्रियापदस्य
साङ्केतिकीशक्तिः फले तु यौगिकः प्रयोग इत्यत्रैव न दृढतरं मानं येनो-
क्ताधिकरणावतारः सम्भाव्येत प्रायेण तस्य तु यौगिकत्वे नाऽप्युपपत्तेरत
आह। किञ्चेति। तथाभूतानीति। विशेषणानीत्यर्थः। कर्त्राऽऽख्यातस्य-
ले दृष्टत्वादिति भावः। गुणानामिति। विशेषणानां परार्थत्वादन्योपका
रकत्वादत एव समत्वात्समानधर्मत्वात्तेषां परस्परं सम्बन्धो न भवेदिति
न्यायार्थः। तथा च यथा फलस्योपकारकत्वाद् विशेष्यभावनायामन्वय

त्वात् स्यादिति न्यायेन सर्व्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति । न हि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुक इति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्वियन्तीति मीमांसका अपि मन्वन्ते । एवञ्च विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुरिति कार्य्यकारणभावस्य क्लृप्तत्वात् यत्रापि पक्त्वा पाचक इत्यादौ भावना गुणभूता तत्रापि क्लृप्तकार्य्यकारणभावानुरोधात्तस्यामेवान्वय इत्यवसीयते इत्यादि भूषणे प्रपञ्चितम् । केचित्तु भूतले घटः देवदत्तो घटमित्यादावन्वयबोधाकाङ्क्षा-

स्तथा कारकाणामपि साक्षात्परम्परया वा तत्रैवान्वयोऽन्यथा कारकत्वस्यैवाऽनुपपत्तेर्न तु फले निराकाङ्क्षत्वादिति भावः। तदनुसारिलौकिकन्यायमप्युपन्यस्यति। नहिभिक्षुकइत्यादि। मीमांसकाअपीति। उक्तन्यायेन कारकप्रकारकबोधं प्रत्याख्यातजन्यभावनोपस्थितेर्हेतुतायास्तैः क्लृप्तत्वादिति भावः॥ कारकादीत्यादिना। लडाद्यर्थकालपरिग्रहः। गुणभूतेति। क्त्वाद्यर्थकर्त्तरि विशेषणीभूतेत्यर्थः। एतेन पूर्वोक्तन्यायस्य तत्राऽसम्भवो दर्शितः। तस्यामेवेति। धात्वर्थभावनायामेवेत्यर्थः। प्रपञ्चितमिति। फलांशे तु न कारकाणामन्वयः मीमांसकमतेऽपि तस्याऽव्युत्पन्नत्वादन्यथा कारकान्वितस्य कारकत्वाऽसम्भवेन यागरूपफलस्य करणतया क्रियायामनन्वयाऽऽपत्तेरिति हि तत्रोक्तम्। अदर्शनादिति। सर्वं

निवृत्त्योरदर्शनान्न तद्व्यतिरेकेण साधुत्वलाभ इत्याहुः ॥ १७ ॥

स्वयमुपपत्तिमाह।

यदि पक्षेऽपिवत्यर्थः कारकञ्च नञादिषु ।
अन्वेति त्यज्यतां तर्हि चतुर्थ्यां स्पृहिकल्पना॥१८॥

पर्वतो वह्निमान् धूमात् महानसवत् भूतले न घटः भूतले घट इत्यादिपदात् एवमादिष्वनुशासनविरोधे-

ष्हि वाक्यं क्रियया परिसमाप्यते इति न्यायेन तत्राऽस्तिजानात्यादिक्रियासन्तरेणाऽन्वयबोधनिराकाङ्क्षत्वयोरदर्शनादित्यर्थः । तत्र चैत्रः सुन्दर इति क्रियासाकाङ्क्षवाक्यस्याऽसाधुताऽऽपत्तिः फलांऽशाऽन्वयलाभेनैवोपपत्तौ भावनावाचकत्वाऽलाभश्चेत्यस्वरस आहुरित्यनेन सूच्यते ॥ १७ ॥

उपपत्तिमिति । उक्ताऽष्टकस्य भावनायामन्वये साधकोपमा सरूपा तामुक्ताऽनन्वये वाधकोपमासरूपां तामाहेत्यर्थः । ननु सम्बोधनान्तादीनां क्रियान्वय एव साधुत्वे पर्वतो वह्निमान्महानसवदित्यादौ वत्यर्थसादृश्यस्य कथं पर्वतेऽन्वयः कथं वा भूतले न घट इत्यत्र सप्तम्यर्थभूतलाऽऽधेयत्वस्य तथाऽभावे इत्यत आह । मूले । यदिपक्षेऽपीति । पक्षे प्रतिज्ञावाक्यजन्यबोधविशेष्ये सन्दिग्धसाध्यके धर्मिणि पर्वतादाविति यावत् । कारकमधिकरणादिर्नञादिषु । नञर्थाऽभावे इतरनामार्थे चेत्यर्थः । तमेव विशदयति सार्द्धे । पर्वतोवह्निमानित्यादिना । आदिपदादिति । नञादिष्वित्यादिपदादित्यर्थः।तदेव विवृणोति।एवमादिष्विति। भूतले घट इत्यादावित्यर्थः । अन्वयश्चेति । महानससदृशः पर्वतो भूतलवृत्तित्वाऽभाववान् घटो भूतलवृत्तिर्घटाऽभाव इति वा बोधश्चेत्यर्थः। तेन तुल्यमित्यनुशासनेन क्रियागतसादृश्यबोधन एव वतेः कारक इत्यधिकृता सप्त-

ऽपि यदि साधुत्वमन्वयश्चाभ्युपेयते तर्हि चतुर्थ्या स्पृहिकल्पनापि त्यज्यतामित्यर्थः । अनुशासनानुरोधलौल्ये अर्द्धजरतीयमयुक्तमिति भावः ॥ १८ ॥

एवं कर्त्रादौ विहितानामित्यादीनां क्रिययैवान्वय इत्याह ।

अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः ।
क्रिया सम्बध्यते तद्वत्कृतपूर्व्व्यादिषु स्थिता ॥ १९ ॥

न विविच्य ग्रहो ग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत् । यथा च ग्रामं गत इत्यत्र क्त-

स्याधिकरणे चेतानुशासनेन क्रियान्वय एव सप्तम्याश्च साधुत्वबोधनादुक्तं यदीति । चतुर्थ्यादिति । पुष्पेभ्य इत्यत्र स्पृहेरीप्सित इति विहितचतुर्थ्याः स्पृहयत्युपात्तार्थे एव स्वार्थाऽन्वयबोधकत्वम् । न पदान्तरोपात्ते अध्याहृते वा तदर्थेऽनुशासनविरोधादिति स्वसिद्धान्तस्त्यज्यतामित्यर्थः । अर्द्धजरतीयमिति । इदमर्थे गहादित्वाच्छः क्वचिदनुशासनाऽनुरोधः क्वचिन्नेत्यर्द्धजरतीसदृशमित्यर्थः । तथा च स्वीयसिद्धान्तप्रच्युतिरूपबाधकाभिया वाऽपि पर्वतो वह्निमान् भवितुमर्हतीत्येव प्रतिज्ञाङ्गीकरणीया न तु क्रियावाचकपदशून्या सेति नोक्तनियमे व्यभिचारो भूतले न घट इत्यादौ यद्वक्तव्यं तत्तूक्तं वक्ष्यते वाऽधिकमिति भावः ॥ १८ ॥ कृतपूर्वीत्यत्र भावविहितक्तेन सिद्धाऽवस्थापन्नो भाव उच्यते तद्विशेषणं च प्रकृत्यर्थ क्रियेत्याशयेन मूलमवतारयति । एवमित्यादिना । कर्त्रादावित्यादिना भावपरिग्रहः इत्यादीनामित्यादिना क्त्वातुमुनादीनां सम्बन्ध्यत इति कारकप्रकारकबोधं प्रति विशेष्यतया धातुजन्यभावनोपस्थितेर्हेतुतायाः पूर्वमुक्तत्वा

**प्रत्ययार्थं गुणीभूतापि क्रिया ग्रामादिकर्म्मभिः सम्बध्यते तथा कृतपूर्वी कटमित्यत्रापि गुणभूता इत्याद्यभिरित्यर्थः । नच वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात्तत्रान्तर्गता भावना पदार्थैकदेश इति**

द्विति भावः। कृतपूर्व्वीकटमिति । नन्वत्र कर्मणि क्ते कटशब्दादनभिहिताऽधिकारीयद्वितीयाऽनुपपत्तिः भावे क्तस्तु सकर्मकाद्गगनकुसुमायमान एव तयोरेवेति नियमात् । अत एव नपुंसके भावेऽपि न सः। तथा च कथमुक्तदार्ष्टान्तिकवाक्योपपत्तिरिति चेदत्राऽऽहुः । कर्मणो विशेषरूपेण प्रागविवक्षयाऽकर्मकत्वाद्भावे प्रत्यये तदन्तस्य पूर्वशब्देन समासे सपूर्व्वाच्चेतीनिः पश्चात्तु कर्मणो विशेषरूपस्य विवक्षया तत्र द्वितीयेति इदं च कर्त्तृकर्मणोः कृतीति भाष्ये स्पष्टम्। ईदृशविवक्षाऽविवक्षे च तद्भाष्यप्रामाण्यात्कृतपूर्व्वीत्यादिविषये एव नाऽन्यविषय इति बोध्यम् । इत्यादिभिरिति । तदर्थकर्त्राऽऽदिभिरित्यर्थः । वस्तुतस्तु दार्ष्टान्तिके स्ववाचकप्रकृतिकप्रत्ययार्थेऽन्यस्मिन्नगुणीभूतकटादिकर्मभावादिभिरिति व्याख्येयम्। नातः कृतपूर्व्वीति प्रयोगघटकक्तस्य धात्वर्थाऽनुवादकत्वेऽपि क्षतिः पूर्वकालिकक्रियाकर्त्तेति ततो बोधेन तादृशक्रियाया इत्यर्थकर्त्तरि गुणत्वात् । नाऽप्ययं भावाऽधिकारीयस्वातन्त्र्येणाऽप्रयोगात् । अत एव भोक्तुं गतमेतेनेत्यादिप्रयोगोपपत्तिः । भावाऽनधिकारीयभावविहितप्रत्ययस्य धात्वर्थानुवादकत्वात्प्रकृत्यर्थक्रियाया अगुणत्वात् एवमव्ययकृतो भाव-इत्युक्तेः पाक इत्यादिप्रयोगस्थघञर्थात्तु मुनाद्यर्थे वैलक्षण्यानुभवात्तु मुनादीनामपि साध्यमात्रस्वभावभावार्थकत्वमित्यर्थकत्वमित्यन्यत्र विस्तरः। वृत्तिमात्रेइति । मात्रपदं कृत्स्नार्थकत्वम् । वक्ष्यमाणत्वादिति । समासे खलु भिन्नैवैत्यनेनेत्यादिः तत्र समासपदस्य वृत्तिसामान्यपरत्वेन

कथं तत्रान्वय इति वाच्यम् । नित्यसापेक्षेष्वेकदेशेऽपि देवदत्तस्य गुरुकुलं चैत्रस्य नप्तेत्यादाविवान्वयाऽभ्युपगमात् । एवं भोक्तुं पाकः भुक्त्वा पाक इत्यत्रापि द्रष्टव्यम् ॥ १९ ॥

व्याख्यास्यमानत्वादिति भावः । कथमिति । गत इत्यादौ क्तप्रत्ययत्वेन गमनकर्तृरूपगतपदार्थैकदेशभावनायां कर्माऽन्वयाऽसम्भवाद्दृष्टान्ताऽसिद्धिरिति भावः । नित्यसापेक्षस्थले हि पक्षद्वयी चैत्रस्य गुरुकुलमित्यत्र विशेषणस्य चैत्रादेर्गुर्वादिद्वारकसम्बन्धेन कुलादिरूपविशेष्य एवाऽन्वय इति तत्रैकः पक्षः । सचोक्तो हरिणा । समुदायेन सम्बन्धो येषां गुरुकुलादिना।संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सहेति उक्तस्थले समुदायनिरूपितसम्बन्ध एव देवदत्तस्येति षष्ठी तत्रैव तदन्वयः ।उक्तञ्च। सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षा हि वृत्तावपि न हीयते । इति नित्यमपिसाऽपेक्षपदाऽर्थाऽन्वयी हि यतो देवदत्तस्य गुरोः कुलमित्यादिव्यस्ते या व्यपेक्षा सासमासेऽपि न हीयत इति कारिकार्थः। पदार्थः पदार्थेनाऽन्वेतीति व्युत्पत्तिस्तु नित्यसापेक्षाऽतिरिक्तविषयेति तद्भावः । तत्राऽभिमतपक्षमभिप्रेत्य समाधत्ते । नित्यसापेक्षेष्विति । तथा च गुरुत्वादेरन्यनिरूप्यत्वेन तदुपस्थितौ नियमेन जायमानाया निरूपकाऽऽकाङ्क्षाया निवृत्तये देवदत्ताऽऽद्यन्वयवत्प्रकृतेऽपि किं साधकं गमनरूपसाध्यमिति साधनाऽऽकाङ्क्षानिवृत्तये ग्रामादिकर्माऽन्वयस्याऽऽवश्यकत्वान्न दृष्टान्ताऽसङ्गतिरिति भावः । आदिना शरैः शातितपत्र इत्यादेः सङ्ग्रहः । अवतरणिकास्थाऽऽदिपदग्राह्यं स्पष्टयति । एवंभोक्तुमिति । अत्राऽप्यादिपदग्राह्यम् । भुक्त्वा पाक इति । घञर्थभावगुणभूतायां पच्यर्थक्रियायां तु तुमुन्क्त्वार्थक्रियाऽन्वय इति बोध्यमित्यर्थः। अत्र न

अतिप्रसङ्गमाशङ्क्य समाधत्ते ।

कृत्वोऽर्थाः क्त्वातुमुन्नत्स्युरिति चेत्सन्ति हि क्वचित् ।
अतिप्रसङ्गो नो द्वाव्योऽभिधानस्य समाश्रयात् ॥२०॥

भोक्तुं पाकः भुक्त्वा पाक इत्यादौ तुमुन्क्त्वौ क्रियास्तु तुमुन्विधायके क्रियार्थायां क्रियायामित्यत्र प्रत्यासत्त्या क्रिययोरेकजातीयत्वलाभेन स्ववाचकप्रकृतिकप्रत्ययार्थं प्रत्यगुणीभूतायाः साध्यमात्रस्वभावाया एव क्रियायामित्यनेन ग्रहणाद्भोक्तुं गतं भोक्तुं पाक इत्यसाध्वेव । ध्वनितं चेदमुपपदमतिङिति सूत्रभाष्ये । यत्र तु क्रियाभावार्थकस्य ग्रहणं तत्र क्रियामात्रविशेषणादपीति गतपाकादियोगेऽपि तुमुन्क्त्वादीत्याहुः । तेषामयमाशयः । घञाद्यन्तस्थले प्रकृतिप्रत्ययाभ्यां विशेष्यविशेषणभावापन्नसत्त्वाऽसत्त्वस्वभावक्रियाद्वयमुपस्थाप्यते तत्र प्रत्ययार्थक्रियायाः प्राधान्यम् । एवं च धातूपस्थाप्यक्रियायाः साध्यमात्रस्वभावत्वेऽपि तस्या घञर्थं प्रति गुणत्वान्न तत्र तुमुनादीति । तत्रेदं चिन्त्यम् । भावाऽनधिकारीयधात्वर्थाऽनुवादकप्रत्ययान्तयोगे तुमुनो दुर्वारत्वात् । किं च ण्वुल्विधायकेऽप्युक्तविशेषणविशिष्टायास्तस्या ग्रहणमावश्यकं तत्तद्विशेषणीभूतक्रियायाः साध्यमात्रस्वभावत्वेन तद्ग्रहणने ह्रौपाकायेत्यत्र ण्वुलापत्तेरवारणात् । न च तत्रेष्टाऽऽपत्तिः क्रियापदोपादानवैयर्थ्यादध्याहृत्तिपदसामर्थ्येनैव क्रियाया लाभादिति वक्ष्यमाणत्वात् । किं च साध्यत्वेन क्रिया तत्रेति हरिपद्यव्याख्याऽवसरे एकस्यैव सम्बन्धिभेदादाचार्यत्वमातुलत्वादिवदेकस्या एव क्रियायाः प्रकृतिप्रत्ययरूपवाचकसम्बन्धिभेदादुपस्थितिरिति स्वोक्तिविरोधः क्रियाद्वयबोधाऽङ्गीकारे इति॥१९॥ अतिप्रसङ्गमिति। गुणभूतक्रियामादाय कृत्वोर्थोपपत्तिरूपमित्यर्थः। तुमुन्नादीत्यादिना कृष्णं दर्शको यातीत्यत्र ण्वुलः सङ्ग्रहः। क्रिययोरित्यस्योद्देश्यत्वरूपे तादर्थ्ये इति शेषः। विधीयमाना इत्य-

यायां क्रियार्थायाम् समानकर्त्तृकयोः पूर्व्वकाल इति क्रियावाचकोपपदे क्रिययोः पूर्वोत्तरकाले विधीयमानाऽपि तुमुन्नादयो गुणभूतां तामादाय यथा जायन्ते यथा क्त्वार्था अपि स्युः। एकः पाक इत्यत्र एकस्य सकृत्त्व द्वौ पाकौ त्रयश्चत्वार इत्यत्र द्वित्रिचतुर्भ्यः सुच्। पञ्चेत्यत्र कृत्वसुच् स्यात् । तथा च सकृत्पातकः द्विः त्रिश्चतुः पाक इत्याद्यापत्तिरिति चेदिष्टापत्तिः द्विर्वचनमित्यादिदर्शनात्। अतिप्रसङ्गस्त्वनभिधानान्नेत्याह। अतीति । नहि वचिरन्ति परः प्रयुज्यत इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः। केचित्तु क्रियाभ्यावृत्तिगणन इत्यत्र क्रियाग्रहणं व्यर्थं तस्या एवाभ्यावृत्तिसम्भवेन सामर्थ्यात्तल्लाभात्। तथा च साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम् नच पाक इत्यादौ तादृशीति

स्य द्योतकतयेत्यादिः । द्विर्वचनमित्यादीत्यादिना द्विःप्रयोगपरिग्रहः तत्र ल्युड् घञर्थ गुणीभूतक्रियामादाय सुचो दर्शनादिति भावः। तस्या एवेति। क्रियाया एवेत्यर्थः। एवकारेण द्रव्यगुणव्यवच्छेदः तयोस्सकृदेवोत्पत्तेः क्रियायास्तु नैकस्या अपि निवृत्तिभेदायाधातुवाच्यत्वोपगमेन तत्सम्भवादिति भावः। साध्यमात्रेति। यद्यपि धातूपस्थाप्यायां तत्त्वमतमुक्तयुक्त्या तथापि साध्यमात्रस्वभावपदस्योक्तप्रत्ययार्थ गुणीभूतसाध्य-

नाति प्रसङ्गः। द्विर्वचनमिति च द्विःप्रयोगो द्विर्वचनमिति व्युत्पत्त्या द्विर्वचनेऽचीति ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥ २० ॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी इति धातोरेव भावना वाच्या नाख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते।

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम्।
साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥२१॥

भेद्यं विशेष्यं भेदकं विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदस्तन्निबन्धनं साधुत्वम्। अयमर्थः। व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्र बोधकच्छेदक-

स्वभावमात्रपरत्वान्न दोषः। तादृशीति। उक्तरूपेत्यर्थः। व्युत्पत्त्येति। विवरणपरभाष्यकारप्रयोगादित्यर्थः। ज्ञापकमिति। तादृशसूत्रकृत्प्रयोगं हतशायिकाः शप्यन्ते इतिवदिति भावः। आहुरिति। सारग्राहिण इति शेषः॥२०॥सिद्धान्त इति। वैयाकरणसिद्धान्त इन्द्रियाणां स्वविषयेष्वितग्रादिना प्रतिपादिता बोधकतारूपा शक्तिराख्यातेऽप्यबाधितैव ततो भावनाबोधस्य जायमानत्वादित्यर्थः। साधुत्वपरेति। तथा च हरिः। साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिरिति। तत्र। साधुशब्दे। अवच्छेदकतया। बोधजनकताऽवच्छेदकतयेत्यर्थः। अतिरिक्तशक्तिवादे साधुत्वं न शक्तिवादे साधुत्वं न शक्तत्वमसाधोरपि बोधात्किन्तु बोधकत्वमिति व-

तया कल्प्यधर्म्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते। अतिरिक्तशक्तिवाद्यप्याख्यातानामसाधुता भावनायां स्यादेव तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे याज्ञे कर्म्मण्यसाधुशब्दप्रयोगवन्नान्नृतं वदेदितिनिषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादेवेति । ननु त्वन्मते नानृतमिति निषेधः क्रत्वर्थ एव न सिध्येद् आख्या

ख्यमाणसिद्धान्तिमतेऽपीत्यर्थः। असाधुतास्यादेवेति। आख्याताच्छक्तिभ्रमेण भावनाबोधेऽपि तत्र तस्याऽसाधुता स्यादेवेत्यर्थः। तथा च भाष्यकृता सिद्धे शब्दार्थसम्बन्ध इत्यत्र समानायामर्थावगतौ साधुभिर्भाषितव्यं नाऽसाधुभिरिति गम्याऽगम्येतिवन्नियमः क्रियते इति पस्पशायामुक्तम् एवं यादृशविशेषणाऽन्वितयादृशविशेष्यबोधे यादृशानुपूर्व्याः सूत्रकृदाद्यन्यतमसम्मतत्वं तादृशबोधे तादृशाऽनुपूर्वीकः शब्दः साधुर्नाऽन्यत्र। अतएवाश्वशब्दोऽश्वे न साधुः किन्तु निःस्वे अश्वशब्दोनिःस्वे न साधुः किन्तु तुरग इति सङ्गच्छते । नन्वस्तु साधुतेत्यत आह । एवञ्चेति । याज्ञे कर्मणीत्यनेन नाऽन्टतम्वदेन्नाऽपभ्रंसितं वा इत्यादिस्मृतिः क्रतुप्रकरणे पाठादित्यत्र तत्प्रयोगे प्रत्यवायाऽभावं सूचयति। स्यादेवेति। भावनाबोधकत्वेनाऽऽख्यातस्य सूत्रकारादिभिरनुशिष्टत्वाल्कर्तृबोधकत्वेनैव तदनुशासनादिति भावः। मीमांसकः शङ्कते। नन्विति। त्वन्मते। वैयाकरणमते। नान्टतमिति। दर्शपूर्णमासप्रकरणे हि नाऽन्टतं वदेदिति श्रूयते

**तेन कर्त्तुरुक्तत्वात् श्रुत्या पुरुषार्थतैव स्यात् प्रकरणाद्धि क्रत्वर्थता तच्च श्रुतिविरोधे बाध्यतइति चेन्न**

तत्र किमयं प्रतिषेधः पुरुषार्थ आहोस्वित्क्रत्वर्थ इति संशये वदेदित्याख्यातात्कर्तृप्रतीत्या कर्तृवाचकत्वनिर्णयो लः कर्मणीत्यनुशासनात्तस्य कर्तृपरत्वलाभाच्च। प्रत्ययार्थत्वेन वदनं प्रति प्राधान्याद्वदनं तावत्पुरुषार्थोऽत प्रतिषेधोऽपि पुरुषार्थः निषेधप्रतियोगित्वेन वदनक्रियामनुवदता वदेति शब्देन पुरुषार्थतयैव बोधनात्तादृशस्यैवाऽनृतवदनस्याऽनिष्टसाधनताया विपरीतस्वभावबोधकनञा बोधनादन्यादृशाऽनृतवदनस्य चाऽनुपस्थितत्वात्। अत एवाऽनारभ्याऽधीतस्मार्त्तवदननिषेधस्याऽप्येतदेव मूलं भवतीति लाघवम्। अन्यथा तन्मूलभूतः पुरुषार्थोऽन्यो निषेधः कल्प्य इति गौरवं प्रसज्यतेति पूर्वपक्षेऽनन्यलभ्य एव शब्दार्थ इति न्यायाख्यानेनैवाख्यातवाच्या कर्त्ताऽऽख्यातवाच्यभावनाया अविनाभावादाक्षेपलभ्य एवेति न तत्र तस्य शक्तिः। लः कर्मणीत्यादिस्मृतिरपि द्व्येकयोरित्यनेनैकवाक्यतया तत्सङ्ख्यातवाचित्वपक्षे पचति देवदत्त इत्यादौ च गौः शुक्ल इतिवत्सामानाधिकरण्यं लक्षणयैवेति नाऽऽख्यातस्य कर्तृवाचित्वमिति कर्त्तुः श्रुतेरनुपस्थितत्वान्न पुरुषार्थता तस्य किन्तु प्रकरणात्क्रत्वर्थतैवेति निर्णीतं कार्त्राधिकरणे। तत् स्थितं पूर्वपक्षमनुवदति। आख्यातेनेति। तिङेत्यर्थः। तच्चेति। प्रकरणं चेत्यर्थः। श्रुतिविरोधइति। निरपेक्षस्वरूपश्रुतिप्रातिकूल्य इत्यर्थः। तथाहि श्रुत्यादयः षडिह विनियोजकाः तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयदौर्लभ्यादेकेनाऽपरस्य बाधो वक्तव्यः स च बलवता दुर्बलस्येति कस्य दौर्बल्यमित्याकाङ्क्षायां परदौर्बल्यप्रतिपादकं श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति सूत्रं प्रणिनाय महर्षिर्जैमिनिः। श्रुत्यादीनां पठितानां समवाये एकत्रोपनिपाते पारदौर्बल्यमिति। पर एव पारः उत्तरपठितम् तथा चैषां मध्ये यद-

पेक्षया यत्परं तद्दुर्बलमित्यर्थः । तत्र हेतुमाह । अर्थविप्रकर्षादिति । अर्थस्य विनियोजकस्य लिङ्गादितो विप्रकर्षादुत्तरवर्त्तित्वात् । लिङ्गादेर्विलंबेन पूर्वाऽपेक्षया विनियोजकत्वाऽवगतेरिति यावत् । तत्र श्रुत्यादीनामुदाहरणानि निरपेक्षाण्येव स्युः । इतरप्रामाण्याऽनधीनप्रामाण्यकत्वं च निरपेक्षत्वम् । यथा व्रीहीनवहन्तीति । अत्र क्रियाजन्यफलभागित्वं कर्मत्वं बोधयन्ती द्वितीयाश्रुतिरितरनिरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति ॥१॥ अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम् । यथा बर्हिर्देवसदनं दामीति । अत्र लवनार्थप्रकाशकतया लवनस्य विनियोगः ॥२॥ परस्पराऽऽकाङ्क्षावशादेकस्मिन्नर्थे पर्यवसन्नानि पदानि वाक्यम् । यथा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् अग्नये त्वा जुष्टं निर्वपामीति । अत्र मन्त्रलिङ्गेन निर्वापे प्रयुज्यमानस्य समवेताऽर्थभागस्यैकवाक्यताबलेन देवस्यत्वेत्यादिभागस्याऽपि तत्रैव विनियोगः ॥ ३ ॥ लब्धवाक्यभावानां पदानां कार्य्याऽन्तराऽपेक्षावशाद्वाक्यान्तरेण सम्बन्ध आकाङ्क्षा पर्यवसन्नम् प्रकरणं । यथा यथा समिधो यजतीति । अस्य हि दर्शपूर्णमासे कथम् भावाऽऽकाङ्क्षायाः प्रकरणपाठवशाच्छेषत्वम् ॥ ४ ॥ स्थानं क्रमः स चाऽनेकस्याऽऽम्नातस्य सन्निधिविशेषाऽऽम्नानम् । यथा दधिरसीत्यत्राऽऽग्नेयोपांश्वग्नीषोमीययागाः क्रमेणपठिताः एवं मन्त्रभागेऽपि क्रमेणाऽनुमन्त्रणत्रयं पठितम् । तत्राऽऽग्नेयाऽग्नीषोमयोर्द्वयोर्लिङ्गेनैव विनियोगसिद्धिः दधिरसीत्यत्र तु न लिङ्गादिविनियोजकम् किं तु यस्मिन्प्रदेशे ब्राह्मण उपांशुयागविधानं तस्मिन्प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागाऽनुमन्त्रणे तस्य विनियोगः ॥ ५ ॥ समाख्या योगबलम् यथा हौत्रसौद्गात्रमित्यादि । तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन होत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानीति ॥ ६ ॥ विरोधोदाहरणादिर्यथा । श्रुतिलिङ्गयोर्विरोधे श्रुतिर्बलीयसी लिङ्गं तु दुर्बलं अर्थविप्रकर्षात् । यथा कदाचनस्तरीरसीत्यादिकाया ऋचो विनि-

योजिका श्रुतिरैन्द्र्या गार्हपत्यमुपतिष्ठत इति इन्द्रप्रकाशनसामर्थ्याल्लिङ्गादिन्द्रोपस्थापने विनियोगोऽस्याः प्रतिभाति अन्यप्रकाशकस्याऽन्यत्र विनियोगाऽयोगात् । श्रुत्या गार्हपत्योपस्थापने स प्रतीयते । गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात् । एवमैन्द्र्येति तृतीयाप्रकृत्यर्थस्य शेषत्वं क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात् तदनयोर्विरोधः । तत्राऽयं पूर्वपक्षः सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका नह्यसमर्थं श्रुतिसहस्रमपि विनियोक्तुमलम् । अतो लिङ्गस्य बलवत्त्वादिन्द्रोपस्थापनेऽस्या विनियोगः । तदनुरोधितया द्वितीयासमभ्यर्थं तया व्याख्येया गार्हपत्यसमीप इन्द्रोऽनयोपस्थातव्य इत्यर्थः पर्यवस्यतीति । सिद्धान्तस्तु श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तज्ज्ञानमपि येन लिङ्गं बलवद्भवेत् तस्य च पूर्वसत एव विनियोगोऽन्यथाऽनुपपत्त्या ज्ञानं पश्चादुपजायते लिङ्गं तु विनियोजने श्रुतिमपेक्षते नह्यनयेन्द्र उपस्थातव्य इति लिङ्गात्स्वरसतः प्रतीयते किन्त्विन्द्र एतादृगित्येतावन्मात्रम् । तथा च प्रकरणाऽऽम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथाऽनुपपत्त्या लिङ्गेनाऽनयेन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया यया विनियोगो भवेत्ततो यावल्लिङ्गश्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत्प्रत्यक्षश्रुतया विनियोगः सिद्ध इति प्रकरणे निराकाङ्क्षे कयाऽनुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्यं नीयमान इन्द्रपदं परमैश्वर्याऽऽश्रयवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यत इति विरोधोदाहरणान्तराणि त्वन्यतोऽवधार्याणि गौरवभयान्नेह प्रपञ्चितानि । तदयं निर्गलितोर्थः । श्रुतिर्निरपेक्षत्वात्सर्वतो बलवती लिङ्गं तु विनियोगे एकान्तरितत्वाद्व्यन्तरितवाक्याद्बलवत् । एवं वाक्यादावप्यूह्यम् । समाख्या तु पञ्चान्तरितत्वात्सर्वतो दुर्बलेति प्रकृत आकाङ्क्षापर्यवसन्नप्रकरणेन वाक्यम् कल्पनीयम् । तेन च लिङ्गं लिङ्गेन श्रुतिस्तयाऽनृतवदननिषेधस्य क्रतौ

तिङर्थस्तु विशेषणमित्यनेन परिहृतत्वात् न हि गुणभूतः कर्त्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम्। भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकरणात् क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्म्मः अनुष्ठाने विशेषाभावात् जञ्जभ्यमानो न ब्रूयान्मयि द-

विनियोगः यावच्च प्रकरणं वाक्यकल्पनायै प्रक्रान्तव्यापारं तावदत्यच्चया कर्त्रर्थकाख्यातश्रुत्या तस्य पुरुषार्थत्वविनियुक्ते क्लृप्तमपि वाक्याद्यऽकिञ्चित्कारकमिति श्रुतिविरोधे बाध्यत इत्यस्याऽर्थः। लिङ्गादीनामुक्तप्रकारेण श्रुत्यपेक्षया दुर्बलत्वादिति भावः॥

समाधत्ते। तिङर्थस्तुविशेषणमितीति। तथा चाऽऽख्यातश्रुत्या कर्त्तुरुपस्थापनेऽपि न भावनावत्तस्य प्राधान्येन भानं येन निषेधस्य पुरुषार्थता शक्येत किं तु विशेषणतयैव तथोपस्थितस्य च विशेषणाऽन्तरनैराकाङ्क्षेण कर्त्तुः श्रौतनञर्थसम्बन्धाभावान्नाऽत्रश्रुत्या प्रकरणबाध इत्याशयं विशदयति। स्वाङ्गत्वेनेति। स्वविशेषणतयेत्यर्थः। नन्वेवं निषेधस्य क्वाऽपि श्रौतपुरुषाऽर्थता न स्यात्। न कलञ्जं भक्षयेदित्यत्राऽप्युक्तरीत्या कर्त्तरि नञर्थासम्बन्धे श्रौतत्वात्। यदि च कर्त्तुरप्राधान्येऽपि कर्त्तृहत्ति भावनायाः प्राधान्यात्तस्या नञर्थाऽन्वये तद्वाराऽऽख्याताऽर्थकर्त्तुरप्यन्वयाश्च तस्य श्रौतपुरुषाऽर्थत्वानुपपत्तिरिति विभाव्यते तदा प्रकृतेऽपि तुल्यमत आह। अस्तुवेति। अनुष्ठानइति। नाऽनृतं वदेदिति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यजमानस्य प्राधान्यादप्रधानीभूतकर्त्रैवाऽनृतवदनं वर्ज्यं स्यात्क्रत्वर्थत्वेन यज्ञप्रवृत्तेन यजमानेनर्त्विग्भिश्च वर्जनं सिद्ध्यतीति विशेषात्कथमेतदिति वाच्यम्। श्रुतिप्रकरणाभ्यां क्रतुसम्बन्धपुरुषकर्त्तृकाऽनृतवदनाभाव इति बोधेन क्रतुकर्त्तृकेतिबाधे मानाऽभाव इति क्रतुयुक्तेतिव-

दक्षक्रतू इति वाक्योक्तमन्त्रविधिवत् इत्यादि भूषणे प्रपञ्चितम्। नन्वाख्यातस्य भावनायामसाधुत्वे तत स्तद्बोधो न स्यात् साधुत्वज्ञानस्य शब्दबोधहेतुत्वादित्यत आह बोधइति असाधुत्वेऽपि साधुत्वभ्रमाद्बोधोऽस्तु नाम अपभ्रंशवत्। असाधुत्वन्तु स्यादेवेति भावः। वस्तुतः साधुत्वज्ञानं न हेतुस्त-

दतोभिप्रेतत्वादिति दक्षक्रतू इति दर्शपूर्णमासप्रकरण एवैतन्मन्त्रवचनं श्रूयते जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति तत्र किमेतन्मन्त्रवचनं शुद्धपुरुषधर्म उत क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वङ्गमितिसन्देहे वाक्येन तावज्जञ्जभ्यमानपुरुषधर्मतयैवाऽयं प्रतीयते क्तप्रत्ययस्य शानचः कर्तृवाचकत्वात् प्रकरणेन तु क्रत्वङ्गतया प्रकरणं च वाक्यापेक्षया दुर्बलमिति पुरुषधर्मतैव युक्ता सत्यां च फलाऽऽकाङ्क्षायां प्राणाऽपानावेवाऽऽत्मन्धत्त इति वाक्यशेषे श्रुतस्य फलस्य रात्रिसत्रन्यायेन कल्पनादिति पूर्वपक्षे सिद्धान्तः वाक्यप्रकरणयोर्विरोधे बाध्यबाधकभावो नत्वत्राऽस्ति विरोधः जञ्जभ्यमानपदस्य कर्तृवाचकतया तादृशपुरुषस्य क्रतावपि सत्त्वात्तत्संस्कारमुखेन क्रत्वङ्गतासम्भवादेवं चाऽर्थवादोपस्थितफलकल्पनागौरवमिति नेति तथा च बलाबलचिन्ताया विरोध एवौचित्येन जञ्जभ्यमानवाक्येऽनुवचनस्य वाक्यप्रकरणाभ्यां क्रतुयुक्तपुरुषधर्मतावत्प्रकृतेऽप्यनृतवदननिषेधस्य श्रुतिप्रकरणाभ्यां क्रतुसम्बन्धपुरुषधर्मतैवोचिता। उक्तं च भट्टपादैः। स्रग्पायमांसभक्षादिपुरुषार्थमपि स्थितः। प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयादितीति भावः। प्रपञ्चितमिति। प्रपञ्चस्तु शक्तः। ननु साधुत्वज्ञानं विनाऽपि शाब्दबोधोदयेन व्यभिचारात्कथमेतत् साधुत्वस्य शक्तत्वरूपतया निराकरिष्यमाणत्वाच्चात आह। वस्तुतइति। तद्व्यतिरिक्त-

द्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इत्यसाधुरनुमानेनेत्यत्र वक्ष्यामः ॥ २१ ॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्म्मिते।
पूर्णाभूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः ॥

इति वैयाकरणभूषणसारे धात्वाख्यातसामान्यार्थयो निरूपणम् ॥ १ ॥



निर्णयइति। असाधुत्वनिश्चय इत्यर्थः। तन्निश्चयेऽप्यपभ्रंशाद्बोधदर्शनात्तथा चाऽऽख्याताद्भावनाबोधे बाधकाऽभाव इति भावः ॥ २१ ॥

इति भूषणसारदर्पणे धात्वाऽऽख्यातार्थनिरूपणम् ॥ १ ॥

## ॥ अथ लकारार्थनिर्णयः ॥

प्रत्येकं दशलकाराणामर्थं निरूपयति।
वर्त्तमाने परोक्षे श्वोभाविन्यर्थे भविष्यति।

लकारसामान्यार्थे निरूपिते तद्विषयकजिज्ञासानिवृत्ताववश्यवक्तव्यत्वज्ञानाद्विशेषार्थनिरूपणेऽवसरस्य सङ्गतित्वं सूचयन्नाह। प्रत्येकमिति। दशलकाराणामिति। लट्लिट्इत्यादिक्रमेण पठितानामित्यर्थः। आदेशानां वाचकत्वमिति पक्षेऽपि तिङाद्यादेशनिष्ठाऽबोधकतारूपां शक्तिं

विध्यादौ प्रार्थनादौ च क्रमात् ज्ञेया लङादयः॥२२॥

लडादयश्चितः षट् क्रमेणैष्वर्थेषु द्रष्टव्याः। तथाहि वर्त्तमानेऽर्थे लट् वर्त्तमाने लडिति सूत्रात्। प्रारब्धापरिसमाप्तत्वं भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम्। पचतीत्यादावधिश्रयणादधःश्रयणान्ते मध्ये तदस्तीति भवति लट् प्रयोगः। आत्मास्ति

लडादिष्वारोप्य तद्विधानात्तदर्थकत्वं तेषामुक्तमिति भावः। प्रारब्धाऽपरिसमाप्तत्वमिति। विनष्टाद्यवयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वमित्यर्थः। भाविभूतक्रिययोरतिप्रसङ्गवारणाय क्रमेण पदद्वयम् लक्ष्ये लक्षणं ग्राहयति। पचतीति। अधिश्रयणादीति। साध्यत्वप्रकारकप्रतीतिविषयपूर्वाऽपरीभूताऽवयवसमुदायस्यैव क्रियात्वादिति भावः। तदिति। उक्तवर्त्तमानत्वमित्यर्थः। यद्यपि भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्येति निरुक्तभाष्यात् क्रियाऽतिरिक्तकालस्यैव वर्त्तमानत्वादिकं प्रतीयते तथापि निरुपाधिकस्य तस्य वर्त्तमानत्वादिना प्रत्येतुमशक्यत्वादुपाधिभूतक्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयाऽऽवश्यकत्वात् क्रियायामेव तत्त्वमुक्तमित्यवधेयम्। वस्तुतस्तु दण्डमुहूर्त्ताद्यात्मकः खण्डकाल एव वर्त्तमानत्वादिना लडादिवाच्यः तद्गतं वर्त्तमानत्वं च तत्तच्छब्दप्रयोगाधिकरणत्वमेव तदादिन्यायेन शब्दप्रयोगाऽधिकरणत्वेनाऽनुगमाच्च न शक्याऽऽनन्त्यं यद्येवमपि तत्तत्कालत्वेन तत्तत्कालबोधस्याऽनुपपत्तिरिति विभाव्यते तदाऽस्तु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वाऽवच्छिन्न एव लटः शक्तिः क्रियारम्भात्पूर्वं समाप्तेरुत्तरं चाधीते पचतीत्यादिप्रयोगाऽऽपत्तिस्तु स्ववृत्तिप्रागभावाऽप्रतियोगिवृत्तित्वस्ववृत्तिध्वंसाऽप्रतियोगिप्रकृतक्रियाऽनु -

पर्वताः सन्तीत्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम्। उक्तं हि भाष्ये इहभूतभविष्यद्वर्त्तमानानां राज्ञां क्रिया तिष्ठतेरधिकरणमिति।

परतोऽभिद्यते सर्व्वमात्मा तु न विकल्पते।

यौगिकत्वाभ्यां विशेषितेनाऽऽधेयतासम्बन्धेनाऽन्वयनियमोपगमेन वारणीया। यत्र तु खण्डक्रियैव धात्वर्थस्तत्र भुक्ताऽऽधेयतासम्बन्धेनैव तदन्वयान्नाऽऽत्माऽस्तीत्यादौ दोष इति भूतभविष्यद्भिन्नत्वं वेत्यत्र वाकारोऽनास्थायां पूर्वलक्षणाऽपेक्षयाऽस्यगुरुत्वाद्भविष्यत्त्वस्याऽपि वर्त्तमानत्वघटितत्वेन तद्ग्रहे भविष्यत्वग्रहे च तदवच्छिन्नभिन्नत्वरूपवर्त्तमानत्वग्रह इत्यन्योन्याश्रयाच्च एवं भूतत्वमादायाऽप्यन्योन्याऽऽश्रयो द्रष्टव्यः। ननु सत्ताऽऽश्रयत्वादीनां धात्वर्थत्वे तत्राऽसङ्गतिः। तेषामखण्डत्वे नाऽवयवघटितोक्तलक्षणवर्त्तमानत्वाऽसम्भवादत आह। आत्मास्तीति। अनित्यत्वादिति। सावयवत्वेन प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वादित्यर्थः। तद्विशिष्टस्याऽनित्यराजक्रियादिविशिष्टसत्तादिरूपार्थस्येत्यर्थः। तथा च केवलसत्तादिरूपाऽर्थे तदसत्वे प्युक्तविशेषणविशिष्टे तस्मिन्विशेषणांऽशमादाय तत्सत्त्वं नाऽनुपपन्नमिति भावः। यद्वा तद्विशिष्टेत्यस्य तदा अव्यवहितत्वादनित्यत्वस्यैव परामर्शात्तादृशक्रियागतं वर्त्तमानत्वमारोप्य सत्ताद्यर्थको लडित्यर्थः। तत्र तत्र स्वोत्प्रेक्षितत्वं निरस्यति। उक्तं हीति। तिष्ठतेरधिकरणमिति। आधेयतासम्बन्धेन तादृशक्रियात्मककालविशिष्टत्वात्तासामिति भावः। अनेन भाष्येण वस्तुतस्त्वित्यादिनोक्तकल्पस्यैव साधुत्वं लभ्यते तस्मिन्नुक्तलक्षणलक्षितकालस्यैव सर्वत्र क्रियायामाधेयतयाऽन्वयलाभात्। परतोऽभिद्यतइति। सर्वं पच्यादिधात्वर्थसा-

पर्व्वतादिस्थितिस्तस्मात्पररूपेण भिद्यतइति।

वाक्यपदीये च। एवं तम आसीत् तुच्छेनाभ्व पिहितं यदासीत्। अहमेकः प्रथममास वर्त्तामि च भविष्यामि चेत्यादिश्रुतयोऽपि योज्याः। तत्र वर्त्तमानत्वादि लडादिभिर्द्योत्यते। क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्य्यग्राहकत्वेनोपयोगात्। अन्वयव्यतिरेकाभ्यां तद्रूपं लडादि

साम्यं परतः स्वाऽपेक्षयाऽन्यं न वर्त्तमानत्वादिना भिद्यते आत्मास्तित्यात्मादिपदमात्रसत्ताद्यर्थवं न विकल्पते सनातनत्वेन निरवयवत्वादुक्तविशेषणसम्बन्धाऽभावेन भेदाऽनुमितिविषयो न भवतीत्यर्थः। तथा चास्तीति प्रयोगाऽनुपपत्तिरिति पूर्वार्द्धार्थं समाधत्ते। तस्मादिति। विशेषाऽतिरिक्तपदार्थस्य स्वतो व्यावृत्तत्वाऽसम्भवादित्यर्थः। पर्वतादीत्यादिनाऽऽत्माऽऽदिपरिग्रहः। पररूपेणेति। परस्य राजक्रियादिरूपार्थस्य रूपेण धर्मेण वर्त्तमानात्वादिना भिद्यत इत्युक्त एवाऽर्थः। तमइत्यादि। तम आसीदित्यादयो भूतक्रियागतभूतत्वारोपाद्भविष्यामिचेति भाविक्रियागतभविष्यत्वारोपाच्च योज्या इत्यर्थः। पचद्वयस्यैवाऽऽकराऽऽरूढतां प्रदर्शयन् प्रथमद्योतकत्वपचे उपपत्तिमाह। तत्रेति। क्रियासामान्येति। कालसामान्यवृत्तिक्रियावाचकस्येत्यर्थः। तद्विशिष्टे। वर्त्तमानकालादि विशिष्टे वर्त्तमानत्वादिविशिष्टे वा व्यापार इत्यर्थः। लडादेरित्यादिना लिडादिपरिग्रहः। उपयोगादिति। स च प्राक् प्रतिपादितः। तथा च लडाद्यादेशत्वेन तिबादिनां वर्त्तमानात्वादिद्योतकत्वान्नाऽपाक्षीदित्यादौ वर्त्तमानक्रियाप्रतीतिः क्रियासामान्यशक्तधातोस्तत्तद्विशिष्टे लक्षणयैव तत्तद्विशिष्टक्रियाबोधोपपत्तौ पृथग्वर्त्तमानत्वादौ तेषां शक्तिकल्पने

वाच्यमेव । अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम् ।

लिडर्थमाह परोक्षे इति । परोक्षे लिडिति सूत्रात् । कालस्तावदद्यतनानद्यतनभेदेन द्विविधः द्विविधोऽपि भूतभविष्यद्रूपः । तत्रानद्यतने भूते परोक्षे लिडित्यर्थः । तेनाद्यतने भूते अनद्यतने भविष्यति भूतेऽप्यपरोक्षे च न लिट् प्रयोगः स्यात् । परोक्षत्वञ्च साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविष-

गौरवादिति भावः । वाचकत्वपक्षमवलंब्याऽऽह । अन्वयव्यतिरेकाभ्यामितरादि । न च तक्रकौण्डिन्यन्यायात्कर्त्राद्यर्थं बाधः शक्तताऽवच्छेदकभेदात् किं चैवं लःकर्मणीतिसूत्रं निरवकाशं स्यात् स्थलाऽन्तरेऽपि विध्याद्यर्थैर्बोधसम्भवादिति भावः । अन्यथाऽन्वयव्यतिरेकयोः शक्यग्राहकत्वे विलोपापत्तिरिति । सर्वत्र प्रकृत्यैव तत्तत्प्रत्ययार्थत्वाभिमतबोधसम्भवादिति भावः। अधिकं सुबर्थनिर्णये वक्ष्यते । अनद्यतनेभूतइति। भूतइति अनद्यतनेलङितिसूत्राभ्यां तत्तत्पदानुवृत्तिरिति भावः । नलिट्प्रयोगइति। उक्तार्थस्य बाधात्पपाचेत्यादिजबोधानन्तरमनद्यतनत्वाऽऽदिसन्देहाऽनुदयाद्भूतत्वादिव तयोरपि तद्वाक्यजबोधे क्रियांशे विशेषणतया भानमभ्युपेयम् । तच्च वाचकतां द्योतकतां वा विनाऽनुपपन्नमिति लिटस्तदभ्युपगमश्चावश्यक इति भावः ॥ ननु परोक्षत्वं प्रत्यक्षाऽन्यज्ञानविषयत्वम् । तथा च प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्वात्पपाचेत्यादिप्रयोगाऽऽपत्तिरत आह । परोक्षत्वञ्चेति । यथाश्रुतप्रत्यक्षाऽविषयत्वस्योपनीतक्रियायामभावेन तत्र पपाचेत्यादिप्रयोगाऽनुपपत्तिरत आह । सा-

यत्वम् । नच क्रिया नामेयमत्यन्तापरदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुमितिभाष्यात्तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्त्तकमिति शङ्क्यम्।पिण्डीभूतायानिदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात् । अन्यथा पश्य मृगो धावतीत्यत्र तस्या दर्शन

क्षात्करोमीति । साक्षात्करोमीतित्यत्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वमित्यर्थः । उक्तस्थले प्रत्यक्षविषयतासत्वेऽपि तादृशविलक्षणविषयत्वाऽभाववत्त्वमक्षुण्णमिति न तदनुपपत्तिः । प्रत्यक्षं तादृशशब्दप्रयोक्तुर्गीर्ह्य दशमस्त्वमसीत्यादौ शाब्दज्ञानसहकृतमनसैव दशमसाक्षात्कारो न तु शब्दात् लौकिकविषयतानियामकेन्द्रियसंयोगादेरभावे शाब्दे तद्वत्त्वाऽसम्भवात् । अत एव तत्त्वमसीत्याद्याचार्य्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणमिति गीताभाष्ये उक्तमिति सर्वं समञ्जसम् । क्रियानामेयमिति भाष्ये साऽसावनुमानगम्येति शेषः । क्रिया साध्यत्वेन प्रतीयमाना इयं पचतीत्यादिव्यवहारविषयीभूता यतः पूर्वाऽपरीभूता क्रमिकानेकव्यापारसमूहात्मिका अतोऽत्यन्ताऽपरदृष्टा परेण प्रत्यक्षप्रमाणेनाऽत्यन्तमदृष्टा तज्जन्यज्ञानाऽविषया इति यावत् । पिण्डीभूतेति । अवयवानामाशुविनाशित्वेन पिण्डस्यैवाऽभावादिति भावः । ननु तर्हि तस्यां किं प्रमाणमत आह । साक्षादिति । विक्लित्त्यादिरूपकार्य्याऽनुमेयेति । अन्यथेति । क्रियाया अवयवशोऽपि साक्षात्काराऽनभ्युपगम इत्यर्थः । प्रतिभातीति । उक्तार्थ एवाऽस्मद्बुद्धिविषयो भवतीत्यर्थः । ननु क्रियाऽवयवा अपि क्रियावदतीन्द्रिया एव यथा पचेरुदकसेचनादयोऽवयवास्तथा तेषामप्यवयवास्तेऽपि समूहरूपेणैव धातुवाच्याः यस्तु क्षणाऽवच्छिन्नस्तद्रू-

**कर्म्मता न स्यादिति प्रतिभाति । व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतो नोक्तदोषः । अयं पपाचेत्यादावनुरोधाद्व्यापाराविष्टानामित्यपि वदन्ति । कथं तर्हि व्यातेने किरणावलीमुदयन इति स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत् ।**

पोऽवयवः स तु न धातुवाच्यः किं त्ववयवसमूहात्मनैव आश्रितक्रमरूपत्वात्तद्वाच्यस्य । एवं च सदसद्रूपा क्रिया न सद्विषयेन्द्रियग्राह्या । तदुक्तम् । क्रमात्सदसतां तेषामात्मना न समूहिनः । सद्वस्तुविषयै यान्ति सम्बन्धं चक्षुरादिभिरिति अत्यन्तापरिदृष्टेति भाष्यस्याऽप्यवयवरूपेण समूहात्मना चाऽदृष्टेत्येवाऽर्थः । अत एव वर्त्तमाने लडिति सूत्रे भाष्येऽस्ति वर्त्तमानकालः परत्वादित्यगतिवन्नोपलभ्यत इत्युक्तम् । तस्य । प्रत्यक्षेणेति शेषः । एवं च वर्त्तमानत्वाऽऽक्रान्तक्रियाणां स्पष्टमेवाऽप्रत्यक्षत्वं तत उपलभ्यते । पश्य मृगो धावतीत्यादौ तु दृशिर्ज्ञानाऽर्थको धावतिर्वा फलपर इति न कश्चिद्दोषः । किं च अवयवस्य प्रत्यक्षत्वे प्रकृतः कटमित्यादाववयवाऽतीतत्वेन समुदायाऽतीतत्वमादाय भाष्योपपादनवदवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमादाय परोक्ष इत्यस्य चारितार्थ्यं भाष्यस्य पूर्वपक्षस्य निर्द्दलत्वाऽऽपत्तिरित्यपरितोषान्मतान्तरमाह । व्यापाराविष्टानामिति । एवं चाऽतीतानद्यतनव्यापाराऽऽविष्टपरोक्षकर्त्तृकक्रियावृत्तेर्धातोर्लिडिति परोक्षे लिडिति सूत्रार्थः । अयमपि पपाचेति । तदानीं कर्त्तुरपारोक्ष्येऽपि व्यापारदशायां पारोक्ष्यसत्त्वादुक्तप्रयोगोपपत्तिरिति भावः । इत्यपि वदन्तीति । मतान्तराऽनादरेऽत्रापि पूर्वोक्तार्थस्याऽऽपातरमणीयत्वं मन्वाना भाष्याऽनुसारिण इति शेषः । अत्राहुर्यानैयिकाः । पूर्वाऽपरीभूताऽवयवसमुदायाऽऽत्मकपारिभाषिकक्रियावाच्यप्रत्यक्षत्वं युक्तमेव समूहस्यैवाऽभावात् । तदवयवानामपि पारोक्ष्यं तु सर्वाऽनुभवविरुद्धम् । तत्र

असङ्गतमेव । व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपि बहुतरमनः प्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मकेग्रन्थेऽनद्यतनत्वातीतत्वयोर्विस्तारक्रियायामसत्त्वेन लिडसम्भवात् ।

प्रत्यक्षकारणचक्षुःसंयुक्तसमवायादेः सत्त्वादन्यथा घटपुस्तकादेरप्यप्रत्यक्षत्वाऽऽपत्तिरिति बहुव्याकोपः । अधिश्रयणं साक्षात्करोमीति सार्वजनीनप्रतीतेश्च प्रतीतेः पदार्थाऽसाधकत्वेव्यवहारमात्रोच्छेदाऽऽपत्तिश्च सदसतां तेषामित्यस्य विद्यमानाऽविद्यमानावयवरूपाणामित्यर्थात्समूहाऽऽत्मकक्रियायाः पारोक्ष्यप्रतिपादनपरत्वान्न हरिवाक्यविरोधोऽपि । अन्यथा क्रिया सदसद्रूपेति वदतो व्याघातः स्पष्ट एव । कालस्य प्रत्यक्षत्वाऽभावेन तदनुवादकभाष्योपष्टम्भन्यासोऽपि नाऽवयवानां पारोक्ष्योपपादकःप्रकृतः कटमितत्राऽप्यवयवाऽतीतत्वमादायैव प्रयोगोपपत्तौ समुदायाऽतीतत्वारोपे मानाभावेन तद्दृष्टान्ताऽसङ्गतिश्च दार्ष्टान्तिकेऽवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमारोप्य पूर्वपक्षस्य निर्दलत्वाऽऽपादनमपि स्वाग्रहमूलकमेवाऽत एव भाष्ये पश्य मृगो धावतीत्यनेन लौकिकविषयताशाल्यर्थकदृष्टिकर्मत्वं धावतेः प्रतिपादितं कथमन्यथाऽऽगारान्तरस्थितस्य न तादृशप्रयोगः मृगकर्तृकधावने ज्ञानविषयत्वरूपज्ञानकर्मत्वाऽबाधात् । धावतेः संयोगरूपफलार्थकत्वे व्यापारवाचकत्वाऽभावादधातुप्रसङ्गस्य स्वजनकव्यापारगतपौर्वापर्यारोपेण क्रियात्वोपपादने चाऽप्रत्यक्षत्वापत्तिस्तदवस्थैवेति न किञ्चिदेतत्तस्मात्पूर्वोक्तमतमेव निराबाधमिति।व्यासङ्गादिनेति। तथा मत्तोऽहं किलविललापेत्यत्र मदादिना मनोऽसन्निधानात्क्रियापारोक्ष्यं तद्वदित्यर्थः । लिडसम्भवादिति । अत्रेदं चिन्त्यम् । न वास्तवं पारोक्ष्यादिलिडादिनियामकम् । अध्यास्त सर्वर्तुसुखामयोध्यामित्यत्र

लुडर्थमाह। श्वोभाविनीति। अनद्यतने भाविनीत्यर्थः। अनद्यतने लुडिति सूत्रात् यथा श्वोभवितेत्यादौ।

लङोऽसाधुतापत्तेः। किं तु वैवक्षिकं तत्तथा वक्ष्यति च स्वयमेव सारकृत् अनद्यतनभूतत्वेन विवक्षिते लङ् तत्रैव पारोक्ष्यविवक्षायां लिडिति प्रकृते चाऽनायासनिष्पन्नत्व शीघ्रनिष्पन्नत्व प्रतीतिफलकभूताऽनद्यतनत्वविवक्षाया। एवं सूक्ष्मकालेन करिष्यामि यत्र काले मयाऽपि साक्षात्कर्तुमशक्यमिति प्रतीतिफलकपारोक्ष्यविवक्षायाश्च सत्वाल्लिडुपपत्तिसम्भवादिति। अनद्यतनइति। अतीताऽव्यवहितरात्रिपश्चार्द्धविशिष्टाऽऽगामिरात्रिपूर्वार्द्धोपेतं दिनमद्यतनं तद्भिन्नकालत्वमनद्यतनत्वमिति वृत्तिकारादयः। कैयटस्तु लुङ्सूत्रेऽतीतरात्रेरन्त्ययामेनाऽऽगामिरात्रे राद्ययामेन सहितो दिवसोऽद्यतनइत्यूचे। अत्रेदमवधेयम्। अनद्यतनभूते यदा भूतत्वमात्रविवक्षा तदा लुङेव तेन ह्योऽपाक्षीदित्यादौ भूतत्वमात्रविवक्षायां लुङि पश्चात् ह्यःपदेन सम्बन्धे नाद्यतनत्वप्रतीतिरिति न लुङोऽसाधुता। एवमनद्यतनभविष्यति भविष्यत्त्वमात्रविवक्षया लृटस्योपेक्ष्यमाणे देवता वसन्तीत्यत्र पश्चाद्यत्रनद्यतनत्वप्रतीतिरिति। परंतु साङ्गयागस्य द्व्यहात्मककालसाध्यत्वात्तदधिकरणद्व्यहात्मककालस्याऽनद्यतनत्वाऽभावेन लुटोऽनवसराल्लृडुपपत्तिः। अद्यप्रभृति मे दाशरथ्यमरुथ्यं भविष्यतीतिवदित्याहुः। नन्वहमेकः प्रथममासं वर्त्तामि भविष्यामि चेत्यत्र धात्वर्थसत्तायां वर्त्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्त्वस्य वाधात्तदर्थकाद्भविष्यदर्थकप्रत्ययाऽप्रसक्तिरत आह। तत्त्वञ्चेति। वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकसमयवत्त्वमिति पाठः। तथा च तदर्थव्यापाराऽधिकरणस्य कालस्याऽनितरराजक्रियाऽऽद्यात्मकस्योत्तभविष्यत्त्वात्तदादायैव लृडुपपत्ति-

**लृडर्थमाह भविष्यतीति। भविष्यत्सामान्ये इत्यर्थः लृट् शेषे च इति सूत्रात्। यथा घटोभविष्यतीत्यादौ। तत्त्वञ्च वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम्।**

रिति यथाश्रुतार्थाऽनुसारिणः। अन्ये तु ननु येषां मते नश्यतरादिधातूनां नाशमात्रमर्थस्तेषां भविष्यत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वसत्वे श्वोभाविनाशके परश्वो नंक्ष्यतीति प्रयोगाऽऽपत्तिः वर्त्तमाननाशप्रागभावप्रतियोगिनि तन्नाशे परश्वस्तनकालवृत्तित्वसत्त्वात्। न च परश्वस्तनकालस्य भविष्यत्त्वघटकप्रागभावेऽन्वयाऽभ्युपगमात्तस्य च तत्प्रागभावे बाधान्नोक्तप्रयोगाऽऽपत्तिरिति वाच्यम्। तथा सति श्वोभाविनाशकेऽपि श्वो नंक्ष्यतीति प्रयोगाऽनुपपत्तिः। तन्नाशप्रागभावे श्वस्तनकालसम्बन्धबाधादत आह। तत्त्वञ्चेति। अत्र समयपदोपादानं कालो लडाद्यर्थ इत्यभिप्रेत्य न तु तस्य लक्षणे निवेशः प्रयोजनाभावाद्विद्यमानप्रागभावप्रतियोग्युत्पत्तिकत्वस्यैव सम्यक्त्वात् यत्र तूत्पत्तिरेव धात्वर्थस्तत्र तदघटितमेव तन्निर्वक्तव्यं। अन्यथोत्पत्तेर्द्विधा भानप्रसङ्गात्। एवं चोक्तस्थले भविष्यत्त्वघटकोत्पत्तौ परश्वस्तनकालवृत्तित्वबाधान्नोक्तप्रयोगाऽऽपत्तिरितीत्यवतारयन्ति। अत्रेदमवधेयम्। इहाऽद्य घटो भविष्यतीत्यादौ देशकालविशेषादेरधिकरणत्वेन धात्वर्थोत्पत्तावेवाऽन्वयः। ननु भविष्यत्त्वघटकप्रागभावे उत्पत्तिमति वा तथासति कपालनाशजन्यघटनाशस्थले इह कपाले घटध्वंसो भविष्यतीति प्रयोगाऽऽपत्ते र्घटरूपप्रतियोग्यात्मकघटध्वंसप्रागभावस्य कपाले सत्त्वादेवं श्वो भाविन्यद्य भविष्यतीति प्रयोगप्रसङ्गश्च। अद्यतनकालवृत्तित्वस्य प्रागभावे सत्त्वात्तथा भवने श्वः समुत्पद्यप्राङ्गणे परश्वो गमिष्यति मैत्रे प्राङ्गणे परश्वो भविष्यतीति प्रयोगाऽऽपत्तिरुत्पत्तिमतो मैत्रस्य प्राङ्गणवृत्तित्वात्परश्वस्तनकालवृत्तित्वाच्च यथात्वे तु तस्य

लेटोऽर्थमाह विध्यादाविति। लिङर्थे लेडिति सूत्रात्। लिङर्थश्च विध्यादिरिति वक्ष्यते।

लोडर्थमाह। प्रार्थनेति। आदिना विध्याद्याशिषो गृह्यन्ते। आशिषि लिङ्लोटौ लोट् चेति सूत्राभ्यां तथावगमात्। यथा भवतु ते, शिवप्रसादइत्यादौ। एतयोरर्थौ लिङर्थ एव त्रयाणां समानार्थत्वादिति तन्निर्णयेनैव निर्णयः ॥ २२ ॥

लङादिक्रमेण ङितामर्थमाह।

ह्योभूते प्रेरणादौ च भूतमात्रे लङादयः।
सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः ॥२३॥

लङर्थमाह। ह्योभूतइति। अनद्यतने भूतइत्यर्थः

रवस्तनकालवृत्तित्वेऽप्युत्पत्तेस्तत्कालवृत्तित्वान्न कश्चन दोषः। एवं च वर्त्तमानप्रागभावप्रतियोग्युत्पत्त्यनुकूलो घटाऽऽश्रयको व्यापार इति बोधस्तथा चोत्पत्त्यघटिते भविष्यत्वे लृडादेः शक्तिर्लाघवात्तदघटिते तु लक्षणेति न नंक्ष्यतीत्याद्युक्तस्थल उत्पत्तिबोधाऽनुपपत्तिरिति विध्याशिषाविति। आशीस्तु हितविषयकलोडाद्यन्तशब्दप्रयोक्तृेच्छा। भवतु ते इति। हितविषयकमदिच्छाविषयत्वसम्बन्धिशिवप्रसादकर्त्तृकं भवनमिति बोधः। एतयोरिति। लेट्लोटोरित्यर्थः। त्रयाणां। लेट्लोट्लिङामित्यर्थः। तन्निर्णयेनैवेति। लिङर्थनिर्णयेन इत्यर्थः ॥ २२ ॥ ह्यःपदस्याऽव्यवहितातीतदिवसे रूढतया तदात्मककालस्य लङर्थत्वेनैकदिनान्तरितभूते लङनुपपत्तिरत आह। अनद्यतनइति। तथा च ह्यःपदं लक्षणयाऽनद्यतनत्वेनाऽद्यतन-

अनद्यतने लङिति सूत्रात् । यथाऽस्य पुत्रोऽभवदित्यादि ।

लिङर्थमाह प्रेरणादाविति । विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङिति सूत्रात् । तत्र (विधिः) प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् । (निमन्त्रणम्) नियोगकरणम् । आवश्यके प्रेरणेत्यर्थः । आमन्त्र-

णाद्यबोधकमिति नोक्तदोषाऽवकाशः । एवं श्वोभाविनीत्यत्राऽपि बोध्यम् । अस्य पुत्र इति । वर्त्तमानध्वंसप्रतियोग्यऽनद्यतनकालवृत्तिरेतत्सम्बन्धिपुत्रकर्त्तृकोत्पत्त्यनुकूलो व्यापार इति बोधः । अध्यास्त इत्यादौ तु भूताऽनद्यतनत्वमात्रविवक्षया लङुपपत्तिः सूत्राद्विध्यादीनां लिङर्थत्वप्रतीतेः कथं प्रेरणादेर्विध्यर्थत्वमत आह । तत्रेति । तेषु मध्ये इत्यर्थः । विधिः प्रेरणमिति । प्रेरणापर्यायो विधिशब्द इत्यर्थः । प्रेरणायाः लिङादिशब्दस्वरूपतां वदतां मतं निराकर्त्तुं प्रेरणायाः स्वरूपं दर्शयति । भृत्यादेरित्यादि अयम्भावः । यद्विषयकत्वेन ज्ञानस्य प्रवृत्तिजनकत्वं सैव प्रवर्त्तना तादृशविषयतानिरूपकत्वं चेष्टसाधनताया एव न तु लिङादीनां तद्विषयकज्ञानात्प्रवृत्त्यनुदयात् सा यदि वक्त्रपेक्षयाऽपकृष्टोद्देश्यकप्रवर्त्तकज्ञानविषयीभूता तदा प्रेरणेत्युच्यते । अन्यादृक् तु निमन्त्रणादिपदव्यपदेश्या । तथा च स्वाऽभिलषितोपायाऽज्ञानादप्रवृत्तापकृष्टप्रयोज्यस्योपायविषयकप्रवृत्त्यनुकूलो व्यापारः प्रेरणेति पर्यवस्यतीति । अधिकमग्रे वक्ष्यते । तत्र वैदिकमुदाहरणं स्वर्गकामो यजेतेत्यादि स्वर्गकामाऽभिन्नकर्त्तृकयागभावना स्वर्गादीष्टसाधनमिति वैयाकरणमते बोधः । भावनायामिष्टसाधनत्वं तु प्रत्यासत्त्या स्वर्गकामस्यैव । तादृशयागमिति अभिसन्धाय यागादौ नियोज्यस्य प्रवृत्तिर्निर्वहति लौकिके तु जलमाहरेत्यादिबोधः स्वय-

णम् कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्या-

मृग्यः । नियोगकरणमिति । विप्रं निमन्त्रयत इत्यादितो विप्राऽन्नथकप्रवृत्तिजनकभावनाबोधेन प्रकृते विनियोगपदार्थः प्रवृत्तिस्तत्कारणं तदनुकूलो व्यापार इत्यर्थः । आवश्यकइति । श्राद्धभोजनादिषु तथा प्रेरणेति प्रवर्त्तनेत्यर्थः । अस्य दौहित्रादेरित्यादिः। तत्राऽप्रवृत्तस्य प्रवृत्त्यनुकूल व्यापार इति यावत्। यथेह भुञ्जीत भवान् इत्यादि। कामचारानुज्ञेति। स्वेच्छया प्रवृत्तस्य तत्र प्रवृत्तिप्रतिबन्धफलकस्वाभिलषितविषयकप्रवृत्त्यनुकूलो व्यापार इत्यर्थः। यथेहासीताऽऽस्यं कुरुत सत्कुरुष्व यथा हि तमित्यादिउपवेशनादिव्यापार इष्टसाधनताज्ञानात्प्रवृत्तावितरथाऽप्रवृत्तिरदनः फलति । सत्कारपूर्वकोव्यापारइति । अध्यापनादिव्यापारे सम्मानपूर्वकप्रवृत्त्यनुकूलो व्यापारोऽधीष्टपदार्थ इत्यर्थः । अयमेवाऽभ्यर्थनेत्युच्यते उक्तौ त्विष्टसाधनत्वं अनुकूलत्वं च प्रवृत्तिजनकतावच्छेदककोटिप्रविष्टतया बोध्यम् । सम्प्रधारणमिति । उपस्थितक्रिययोर्मध्ये एकतरक्रियाधर्मिकेष्ट साधनत्वनिर्णयेच्छेत्यर्थः । यथा किं भोवेदमधीयीयोत तर्कमिति सोऽहेध्यकत्वसम्बन्धेन सम्बोध्यत्रिशिष्टा मन्निष्ठा च वेदाध्ययनतर्काध्ययनान्यतरभावनेष्टसाधनत्वप्रकारकनिर्णयेच्छाविषय इति बोधः एवमग्रेपि । विधिःप्रेरणमिति । प्रेरणं प्रवर्त्तनमित्यर्थः । अप्रवृत्तप्रयोज्यस्याऽज्ञातस्वाऽभिलषितोपाय इष्टसाधनताबोधनमिति यावत् । अपकृष्टोद्देश्यकतादृशेष्टसाधनत्वबोधविषयाऽप्रयुक्तम् । लिङादिघटितं वाक्यमेवाऽऽज्ञोपदेशपदाभ्यां व्यपदिश्यते तदेवाऽऽह । भृत्यादेरिति । आदिना शिष्यादिपरिग्रहः । तत्र लौकिकमुदाहरणम् । भवाञ्जलमानयेदित्यादि वैदिके स्वर्गकामो यजेतेत्यादि । नियोगकरणमिति । निमन्त्र्यते नियुज्यतेऽनेनेति व्युत्पत्त्या नियोगाऽनुकूलो व्यापारो निमन्त्रणपदार्थ इत्यर्थः । आवश्यकइति । श्राद्धभोजनादावित्यर्थः । प्रेरणस्य दौहित्रादेरित्यादिः । तथाचाऽऽवश्यके

औदासीन्येन यत्प्राप्यं यच्च कर्त्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकमिति वाक्य
पदीयात् ।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते ।
तन्निर्वर्त्यं विकार्य्यन्तु द्विधा कर्म्म व्यवस्थितम् ।

याप्रकृतयोऽऽवृत्तीतयनेन द्वितीयाप्रकृतयर्थवृत्तिभेदप्रतियोगिताऽवच्छेदक ऽवस्थाऽविवक्षणात्परस्परं गच्छत इत्यादौ क्रियायाः परस्परावृत्तित्वबाधेऽपि परस्परनिष्ठभेदप्रतियोगिताऽवच्छेदकत्वस्याऽबाधान्न फलाऽन्वयाऽनुपपत्तिरित्यादि तत्रोक्तमिति ॥ हरिकृतं कर्मविभागमाह । तत्वेति । क्रियाजन्यफलाऽऽश्रयरूपं कर्मेत्यर्थः । यदसज्जायतइति । असत्कार्य्यवादमवलम्ब्य सद्वेत्यादित्तु साङ्ख्यमतेन प्रकाशत इत्यनन्तरं प्रकृतेस्तु विवक्षायां विकार्य्यम् कैश्चिदन्यथा तन्निर्वर्त्य मित्येव वाक्यपदीयपाठः । अन्यथा सामान्यवर्त्मणाऽलक्षितस्य विकार्य्यस्य विशेषरूपेण प्रदर्शनेऽर्थाऽन्तरतापत्तेः तदर्थस्तु कैश्चित्प्रसिद्धैराचार्य्यैः प्रकृतिविवक्षायां निष्पाद्यं विकार्य्यमित्युच्यतेऽन्यथा तदविवक्षायां तन्निष्पाद्यं निर्वर्त्यमिति तदर्थः । तत्र घटं करोतीत्यादौ सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाऽविवक्षा भस्मकरोतीत्यादौ त्वसत्या एव तस्यास्तत्त्वेन सा यद्यपि निर्वर्त्यं निष्पाद्यते इति व्युत्पत्त्या निर्वर्त्यत्वम् तण्डुलानोदनं पचतीत्यादावोदनादौ विकार्य्यकर्मत्वमप्यस्ति तथापि प्रकृतिवाचकपदाऽसमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वरूपपारिभाषिकनिर्वर्त्यत्वस्य विवक्षणान्न दोषः ॥ तदुक्तं ॥ सती वा विद्यमाना वा प्रकृतिः परिणामिनी । यस्य नाऽऽश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षत इति । यस्य विकृतिकर्मणः नाऽऽश्रीयते न प्रयुज्यते न विवक्ष्यत इति यावत् । अन्यदुक्तार्थं विकार्य्यन्त्विति।

प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत् ।

तल्लक्षणं तु प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टाऽसत्त्वोत्पत्त्यन्यतरफलवत्त्वं घटं करोतीत्यादिनिर्वर्त्ये क्रियानिर्वाह्योत्पत्तिमत्यपि प्रकृतिविकृतिभावाऽभानान्नाऽतिप्रसङ्गः प्रकृतिकर्मणस्तादृशविशिष्टाऽसत्त्वाद्विकृतिकर्मणश्च तादृशोत्पत्त्याऽऽश्रयत्वाल्लक्षणसङ्गतिः ईदृशस्थले फलद्वयप्रयोजकव्यापाराऽर्थकत्वं धातोरावश्यकम् । उक्तं च भाष्ये द्व्यर्थः पचिरिति । अन्यथैकफलैकव्यापारार्थकत्वस्याऽकर्मकेष्वपिसत्त्वाद्विशेषोपादानाऽनर्थक्यप्रसङ्गात् । परे तु द्व्यर्थः पचिरितिभाष्याद्विक्लेदनं निर्वर्तनं च पचेरर्थः तण्डुलानोदनं पचतीत्यस्य तण्डुलान्विक्लेदयन्नोदनं निर्वर्त्तयतीति विवरणात् । तथा च प्रकृते तण्डुलाऽऽश्रयविक्लित्त्यनुकूलव्यापाराऽऽश्रयाऽऽश्रयक ओदनाऽऽश्रयकोत्पत्त्यनुकूलो व्यापार इति बोधः । एवं काष्ठं भस्म करोतीत्यादावप्यूह्यमित्याहुः । तदसत् । भावनाप्रकारकबोधे हेतुत्वेन क्लृप्तायाः शब्दात्वन्यतरजन्योपस्थितेर्विशेष्यतासम्बन्धेनाऽऽख्यातार्थेऽभावेन तादृशबोधाऽसम्भवात् एकयैव क्रियया फलद्वयोत्पत्तिसम्भवेन तद्वाक्यजन्यबोधस्य व्यापारद्वयविषयकत्वकल्पनाऽनौचित्यादाख्यातशब्दान्निवृत्तभेदाया एव क्रियया अवगमादिति रूपप्रदीपकैयटाच्च । किं च पचेर्व्यापारद्वयाऽर्थकत्वे नव्यमते क्रियायां द्वित्वाऽबाधेन द्विवचनाऽऽपत्तिर्दुर्वारा । वस्तुतस्तु विक्लेदनं विक्लित्तिर्निर्वर्त्तनमुत्पत्तिरिवोक्तपदयोर्भावल्युडन्तत्वात् । तथा च फलद्वयाऽनुकूल एक एव व्यापारो धात्वर्थतया भाष्यकृत्सम्मतः व्यापारद्वयार्थकत्वोक्तिस्तु केषाञ्चित्तत्पदयोर्णिजन्तप्रकृतिकल्युडन्तत्वभ्रमनिबन्धनैवेत्यवधेयम् । यद्यपि विकार्यं द्वेधा प्रकृतिर्विकृतिश्चेत्येवं तु सुचितम् तथापि विकृतिद्वैविध्येऽवगते प्रकृतावपि विकार्यत्वं ज्ञातप्रायं भवतीत्याशयेन तदनुक्त्वैव विकृतिकर्म विभजते । प्रकृत्युच्छेदेति । एतेन क्रियानिर्वाह्याऽभावः प्रतियोगिताऽव-

च्छेदकधर्मवत्त्वं प्रकृतिकर्मत्वमिति ध्वनितम्। काशान् कटं करोति कुसुमानि स्रजं करोति सुवर्णं कुण्डलं करोति मृदं घटं करोति काष्ठं भस्म करोति तण्डुलानोदनं पचतीत्यादौ क्रियानिर्वाह्यो यः पूर्वभावविशिष्टकाष्ठकाशादिप्रतियोगिकाऽभावो विशिष्टाऽसत्त्वरूपस्तत्प्रतियोगिताऽवच्छेदकवैशिष्ट्यवत्त्वं काशकाष्ठादेरिति तत्प्रकृतौ लक्षणसङ्गतिः सर्वत्र विशिष्टाऽभावप्रतियोगिनि तादृशप्रतियोगिताऽवच्छेदकवैशिष्ट्यत्वादतिप्रसङ्गवारणाय क्रियानिर्वाह्येति प्रकृतधात्वर्थव्यापारनिर्वाह्याऽर्थकम् क्वचित्काष्ठतण्डुलादिधर्मिनाशादेव विशिष्टाऽभावो भस्मौदनादिसम्पादकः क्वचिद्धर्मिणः सत्त्वेऽपि कटस्रगादिसन्दर्भविशेषविरुद्धरूपपूर्वभावविशिष्टाऽसत्त्वं कटसन्दर्भादिनिष्पादकं क्रियातो निर्वहति। सम्भूतमिति। प्रकृतिनाशप्रयोज्योत्पत्तिमदित्यर्थः। इदं च भस्मवदित्यन्वयि। काष्ठादीति। पृथक् पदं अन्यथा काष्ठसुवर्णादेस्तुरीताऽऽपत्तेः। भस्मवदिति। तत्तौल्येन वर्त्तमानमन्यदपिविकारजातमित्यर्थः। सादृश्यं च प्रकृतिनाशप्रयोज्योत्पत्तिसत्त्वेनैव। एवमग्रेऽपि। तथा च प्रकृतिविकृतिभावाऽऽपन्नकाष्ठभस्माऽऽदिविकार्यमित्यर्थः पर्यवस्यति। एवं च काष्ठं भस्मकरोतीत्यत्र करोतेर्नाश उत्पत्तिश्च फलद्वयम् तदनुकूलव्यापारश्चाऽर्थः नाशे प्रतियोगितया काष्ठस्योत्पत्तौ भस्म न आधेयतया काष्ठप्रतियोगिकनाशाऽनुकूलो भस्मोत्पादको वर्त्तमानो व्यापार इति बोधः। एवं तण्डुलानोदनं पचतीत्यादावपि। नैयायिकास्तु। तण्डुलानोदनंपचतीति विकार्यस्थले प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थः विकृतिकर्मोत्तरद्वितीयायाश्चोत्पादकत्वम्। तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति ओदनान्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेऽन्वयनाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यविधेयभावमहिम्ना भासते तेन पाकस्य तण्डुलारम्भकसंयोगनाशकत्वेऽपि संयोगमोदनम् पचतीति न प्रयोगः तण्डुलाऽऽरम्भकसंयोगनाशस्यौदनोत्पत्तौ तण्डुलनाशे गाऽन्यथासिद्धतयाऽप्रयोजकत्वात्। वस्तुतस्तु विकृति-

कर्माऽसमभिव्याहृते तण्डुलं पचतीति वह्निसंयोगं पचतीति प्रयोगवारणाय नाशद्वारा नाशकत्वमेव द्वितीयाऽर्थो वाच्य इति प्रकृते प्रयोज्यप्रयोजकभावाऽभानेऽपि न क्षतिः । तथा च तण्डुलनाशक ओदनोत्पादको यो व्यापारस्तदनुकूलकृतिमानिति बोधः । ईदृशस्थले च कर्माऽऽख्याते न प्रकृतेः कर्मत्वमेवाऽभिधीयतेऽत एव काष्ठानि भस्मराशिः क्रियन्त इत्यादौ काष्ठपदसमानवचनत्वमाख्यातस्य न तु भस्माऽऽदिविकारवाचकपदसमानवचनत्वम् भावनाऽन्वयिनि सङ्ख्यान्वयनियमात् । ननु प्रधानाऽप्रधानकर्मवाचककर्मपदसमभिव्याहृतनीवहादिदुहादिप्रकृतिककर्माऽऽख्यातस्यैवाऽप्रधाने नीह्वकृष्वहामित्यनुशासनात्कर्मत्वद्वयाऽनभिधायकत्वाऽनियमेन प्रकृते कर्मत्वद्वयस्यैव तुल्यतया विकृतिगतकर्मत्वस्यैवाऽभिधाने बाधकाऽभावः ॥ आख्यातस्य विकृतिसमानवचनत्वप्रसङ्गस्तु गृह्णाति वाचकः सङ्ख्यां प्रकृतेर्विकृतेर्नेत्यनुशासनसिद्धविकृतिसङ्ख्याऽन्वयबुद्धिं प्रति प्रकृतिसङ्ख्याऽन्वयपरत्वेनाऽगृह्यमाणाऽऽख्यातजन्योपस्थितेर्हेतुत्वकल्पनया निरसनीयः । कथमन्यथा भस्मीभवन्ति काष्ठानीत्यादिप्रयोगा इतिचेन्न । घटपटौ दृश्येते इत्यत्र द्वित्वस्यैवोभयसाधारणविशेष्यताऽवच्छेदकाऽपरिचयेन विकारविकारिणोर्द्वयोरेवाऽऽख्यातार्थविशेष्यत्वे वा वाक्यभेदापत्तेः । न चेष्टाऽऽपत्तिस्तथा सति काष्ठं नाश्यते भस्म क्रियत इति वाक्यजबोधस्येव काष्ठं भस्म क्रियत इति वाक्यजबोधस्याऽपि भस्मकाष्ठविकृतिरन्यविकृतिर्वेति संशयनिवर्त्तकत्वाऽनुपपत्तेः समूहाऽऽलम्बनजनकत्वाऽविशेषेण काष्ठभस्मनोः प्रकृतिविकृतिभावस्योक्तवाक्यादलाभात् सत्यामेकवाक्यतायां कर्तृप्रत्यये प्रयोज्यप्रयोजकभावस्य विशिष्टाऽन्वयविवक्षानियमेन लाभ इव कर्मप्रत्ययस्थलेऽपि तथा विवक्षाया नियमवशादेव कर्माऽऽत्मनेपदेन भस्मनि काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठविकृतित्वस्य लाभात् । न च विकृतिवाचकाद्द्वितीयाऽऽपत्तिः लकारेण विकृतिकर्मत्वस्याऽनभिधानेऽपि कर्मत्वाऽन्तरविशेषणताऽऽपन्नक्रियायां तस्य विकृत्यर्थे

संसर्गत्वाऽभ्युपगमेनैव द्वितीयाऽऽपत्त्यसम्भवात् प्रातिपदिकार्थविशेष्यतया कर्मत्वाऽऽदिविवक्षायामेव द्वितीयाऽऽवसरात् ॥ न चैवं घट: करोतीत्याऽऽपत्ति: । कर्मत्वाऽन्तरविशेषणताऽनापन्नक्रियायां क्रियाऽन्तरकर्तृत्वविशेष्यताऽऽपन्नाऽर्थकस्यैव कर्मतासंसर्गेण भानाऽभ्युपगमादत एव काष्ठं भस्मराशि: करोतीति न प्रयोग: भस्मराशे क्रियान्तरकर्तृत्वविशेष्यताऽनापन्नत्वादुपपद्यते च पश्य मृगो धावतीत्यादि: प्रकृते च नीलो घटो भवतीत्यादावसाधारणधर्मरूपभवने नीलादेराधेयत्वरूपकर्तृतासम्बन्धेनाऽन्वयोपगमे नैकवाक्यत्वोपपत्त्योत्पन्नसंशयनिवर्त्तकत्वोपपत्ते:। तथा चोत्पादकत्वेन भस्मसम्बन्धिकृतिप्रयोज्यनाशप्रतियोगीनि काष्ठानीति काष्ठं भस्मराशि: क्रियत इति वाक्यजो बोध: सम्बन्धस्य प्रातिपदिकार्थविशेष्यतयाऽविवक्षणादेव न तत्र षष्ठ्यपि । एवमर्थोनमो घटोनेत्यत्रापि प्रकृतिविकृतिभावस्थले कर्मत्वाऽन्तरविशेषणताऽनापन्नाऽधात्वर्थाऽन्वय्यर्थबोधने द्वितीयाया: साधुत्वमिति नियमोपगमेन नोक्तस्थले द्वितीयाप्रसङ्गो नाऽपि उह्यते गौ: क्षीरमित्यादौ तदनुपपत्ति: एवमेकत्वाऽवच्छिन्ने द्वित्वावच्छिन्नाऽऽरोपस्थलेऽप्येको द्वौ ज्ञायत इत्यादावारोप्य विशेष्यवाचकसमानवचनत्वमाख्यातस्य । प्रयुञ्जते च कवय: । एकोऽपि त्रय इव भाति कन्दुकोऽयमिति । न च तत्राऽपि भान्तीत्येवपाठ: । कथमन्यथाऽमानि तत्तेन निजाऽयशोयुगं द्विफालबद्धाश्चिकुरा: शिरस्थितमित्यत्राऽऽरोप्यनिजाऽयशोयुगसमानवचनममानीत्याख्यातं प्रयुक्तम् श्रीहर्षेणेतिवाच्यम्। तत्राऽपि पूर्वार्द्धसमर्थिताऽयशोयुगस्य वास्तवत्त्वेन तस्मिन् फालद्वयबद्धचिकुराणामेव राज्ञ आरोप्यत्वेन कवेरुत्प्रेक्षितत्वात् । अत एव न तत्राऽविमृष्टविधेयांऽशतादोषाऽवकाशइत्याहु: । अत्र केचित्पुनराहु: सुवर्णपिण्ड: पुनरपरयाऽऽकृत्यायुक्त: खदिराऽङ्गारसवर्णे कुण्डले भवत इति भाष्यप्रयोगादाख्यातस्य विकृतिसमानवचनत्वमेव प्रकृति वाचकसङ्ख्यां प्रकृतेर्विकृतेर्नेतीति तु च्विप्रत्ययमात्रविषयकमेवं च काष्ठानि भस्म

किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यत इति च
तत्रैवोक्तम् ।

राशिः क्रियन्त इत्यादिप्रयोगाणामसाधुत्वमेवेति। अपरे तु खदिराङ्गारसवर्णे इति विशेषणेन तत्र कुण्डलयोः प्रकृतित्वं गम्यते संज्ञायाः विकृतेः पाकाऽनपेक्षणात् पुनरपरयाऽऽकृत्यायुक्त इति विशेषणेन तु सुवर्णपिण्डस्य विकृतित्वम् आकृत्यङ्गारयोगस्य प्रकृतित्वाऽप्रयोजकत्वात् युज्यते चैतत् मृत्तिकेत्येव सत्यमितिवत्संहृतिसुखेन पुनराहृत इति विशेषणेनाऽपि सुवर्णपिण्डस्य विकृतित्वं गम्यते। तथाहि पूर्वोपक्रान्ताऽऽकृतिपरम्परायास्तात्पर्यव्यवसायित्वेन सिषाधयिषितसुवर्णनित्यत्वस्य सिद्धेः। तस्मात्पूर्वनिर्दिष्टाऽऽकृतिविशिष्टसुवर्णस्य कुण्डलाऽऽदिप्रकृतेरप्यनिर्दिष्टाऽपराकृतिविशिष्टस्य तस्य विकृतित्वमेव भाष्यकृत्तात्पर्यविषय इत्यस्याऽपि वक्तुम् अशक्यतया न तन्निर्देश आख्यातस्य विकृतिसमानवचनत्वे उपष्टम्भक इति। यच्चेदमाभाति। वैयाकरणमते प्रकृते प्रकृतिविकृत्योर्द्वयोरपि कर्त्तृत्वेनाऽऽख्यातेन कर्त्तृद्वयमेवाऽभिधानीयमेवं तद्गतसङ्ख्याऽपि तत्रैकेनाऽऽख्यातेन विरुद्धसङ्ख्यावतोस्तयोः सङ्ख्याया अभिधातुमशक्यतया भगवता कुण्डले भवत इति विकृतिसङ्ख्यैवोक्ता। ननु प्रकृतिगता नाख्यातप्रतिपाद्येति सुनिश्चयस्याऽऽशाऽस्ति। एवं च प्रयोगवशेन पर्य्यायेणाऽन्यतरसमानवचनत्वमाख्यातस्य निराबाधमिति। क्रियाकृतेति। क्रियाप्रयोज्याऽसाधारणधर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वे सति फलाऽऽश्रयत्वम् निर्वर्त्यादावतिव्याप्तिवारणाय सत्यन्तम्। तत्राऽपि विषयताऽनाश्रयत्वस्य धर्मप्रकारकप्रतीतिविषयतानाऽऽश्रयत्वस्याऽसाधारणधर्मघटितस्य वा तस्य

घटं करोतीत्याद्यम्। काष्ठं भस्म करोतीति, सुवर्णं कुण्डलं करोतीति च द्वितीयम्। घटं पश्यतीत्युदासीनम्। विषं भुङ्क्ते इति द्वेष्यम्। गां दोग्धीति संज्ञान्तरैरनाख्यातम्। क्रूरमभिक्रुध्यतीत्यन्य

घटं जानातीत्यादौ घटादावसम्भव इति प्रयोज्याऽन्तम् धर्मविशेषणम् तथैव क्रियाप्रयोज्याऽसाधारणधर्मसंयोगप्रतीतिविषये ग्रामादिकर्मण्यव्याप्तिनिरासाय। साधारणेति क्रियाजन्यफलाऽनाश्रयेऽति प्रसक्तिनिरासाय विशेष्यम्। न च घटं जानातीत्यादौ क्रियाजन्यफलाऽभावात्सामान्यलक्षणस्याऽव्याप्तिस्तद्वारणाय तत्राऽऽवरणभङ्गाऽभ्युपगमे तु तस्यैव क्रियाप्रयोज्याऽसाधारणधर्मतयाऽयं घट एतेन ज्ञात एतद्व्यवहारविषयत्वेन सत्त्वेन सत्यन्ताभावाद्विशेषलक्षणाऽव्याप्तिरिति वाच्यम्। कर्त्तृभिन्नत्वे सति कर्त्तृकर्मोभयसाधारणक्रियाजन्यफलाऽऽश्रयत्वे उक्तलक्षणवाक्यतात्पर्याद्विषयतया ज्ञानरूपफलाऽऽश्रयत्वाच्च न सामान्यलक्षणाऽव्याप्तिरावरणभङ्गफलमादाय जानात्यादिकर्मणि लक्षणसङ्गमनेऽपीच्छत्यादिकर्मस्वव्याप्तिवारणायोक्तरीतेरेवाऽनुसर्त्तव्यत्वादिति॥ निर्दिष्टक्रमेणोदाहरणान्याह। घटमिति। खाद्यमिति। निर्वर्त्यमित्यर्थः। एवमग्रेऽपि। संज्ञान्तरैरनाख्यातमिति। अपादानत्वाऽऽदितत्तद्रूपविशिष्टैरविवक्षितमित्यर्थः। अकथितञ्चेत्यत्राऽकथितशब्दोऽविवक्षितपरो नत्वप्रधानपरस्तथा सति पाणिना कांस्यपात्र्यां दोग्धीत्यत्र करणाधिकरणयोः कर्मसंज्ञा प्रसज्येत दुह्यादीनां परिगणनात्तस्य ज्ञयोः करोत्यादियोगे साधकाशत्वदिति भावः। तथा च पूर्वविधिप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ च तत्प्रवृत्तिरिति बोध्यम्। यद्यपि विभागानुकूलव्यापारस्याऽपि दुह्यर्थत्वेन कर्त्तुरीप्सिततममित्यनेनैव कर्मसंज्ञा सिद्ध्यति कर्त्तृनिष्ठव्यापारविशेषणफलाऽऽश्रयतया गोः प्रधानकर्मतया न तत्र शास्त्र

पूर्व्वकम् ।

पयस्ति: पयोनिष्ठविभागाऽनुकूलगोनिष्ठव्यापाराऽनुकूलव्यापारस्य शब्दत: प्राधान्यादन्यथासिद्धप्रयोजनकमेतत्सूत्रमित्याभाति तथापि विभागाऽनुकूलव्यापार एव यदि धात्वर्थस्तदाऽपादानत्वाद्यविवक्षायामन्यत् सूत्राऽप्राप्तकर्मत्वार्थमिदमावश्यकम् एतस्मिन्नर्थे त्वप्रधाने दुहादीनामित्यनुशासनाद्गवादावेव लादय: अप्रधानकर्मत्वं चोक्तकर्मभिन्नत्वम् तत्रोक्ताऽर्थे गवादीनामकर्त्तं धात्वर्थफलाऽनाऽऽश्रयत्वात् । तथा चतल्कल्पे न स्थितं द्रवद्द्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थ:। तत्र गोरपादानत्वाऽविवक्षायामनेन कर्मत्वम् तद्विवक्षायां पञ्चमी गो: पयस्यन्वये तु षष्ठी। एवं च गोकर्मकपयोनिष्ठविभागाऽनुकूल एककर्तृको व्यापार इति बोध: । विभागावधित्वमेव गो: कर्मत्वमाद्यकल्पे तु पयोनिष्ठविभागाऽनुकूलगोनिष्ठव्यापाराऽनुकूल एककर्तृको वर्त्तमानो व्यापार इति तत्र विभागाऽऽश्रयत्वात्पयस: कर्मता तदनुकूलव्यापाराश्रयत्वात्तु गो: न तु विभागाश्रयत्वेन पयोनिष्ठविभागीयसम्बन्धस्यैव फलताऽवच्छेदकत्वादेवमन्यत्राप्यूह्यम् । अन्यपूर्वकमिति । अन्यसंज्ञाबाधनपूर्वं शास्त्रबोधितमित्यर्थ: । क्रूरमभिक्रुध्यतीत्यत्र क्रुधद्रुहेर्ष्येतिप्रसक्तसम्प्रदानसंज्ञाया: क्रुधद्रुहोरुपसृष्टयो:कर्मेति बाधनादेवं वैकुण्ठमधिशेत इत्यादावपि बोध्यम् । अजां ग्रामं गमयति शिष्यम् शास्त्रं बोधयति ब्राह्मणमन्नं भोजयति यजमानं मन्त्रं पाठयति घटं जनयति नाशयतीत्यादौ गतिबुद्धीतिसूत्रेण गम्यादिप्रकृतिकणिजन्तधातुसमभिव्याहृतद्वितीयाया आप्याश्रयोऽर्थ: यद्यपि णिजन्तधात्वर्थप्रेरणाजन्यव्यापाररूपफलाऽऽश्रयत्वादजादीनामपि कर्मत्वं कर्त्तुरीप्सिततममित्यनेनैव सिद्धम् तथापि णिजन्तेनाऽऽप्यमानस्य चेद्भवति गत्याद्यर्थव्यापाराश्रयस्यैवेति नियमार्थं सूत्रम्। तेन पाचयत्योदनं देवदत्तेनेत्यादौ न । तदुक्तम् । गुणक्रियायां स्वातन्त्र्यात्प्रेषणेकर्मताकृत: । नियमात्कर्मसंज्ञाया: स्वधर्मेणाभिधीयत । इति वाचकतासम्बन्धे-

न स्वनिष्ठया तृतीययेत्यर्थः यद्यपि । कर्तृसंज्ञायाः परत्वाद्धेतुमति चेत्यनुशासनात्स्वकारकविशिष्टक्रियाया णिजर्थसम्बन्धाऽवगतेरन्तरङ्गत्वाच्च कर्मसंज्ञायास्तया बाध एवोचितः तथाप्यन्यानधीनत्वलक्षणाऽर्थप्राधान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन प्रधानकार्यस्य च सर्वतो बलवत्त्वस्याऽऽकडारसूत्रे कैयटेनोक्तत्वाद्धेतुमति चेति सूत्रस्थभाष्यप्रामाण्याच्च तदनुरोधिकर्मत्वस्याऽन्तरङ्गादपि कर्तृत्वाद्बलवत्त्वान्नियमत्वमेव साम्प्रतम् । परे तु हेतुमति चेत्यनुशासनादन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा स्वतन्त्रप्रेरणा णिजर्थः कर्तृत्वं च क्वचित्प्रयत्नः क्वचिदाश्रयत्वादि यादृशधातूत्तराऽऽख्यातेन यादृशं कर्तृत्वमभिधीयते तादृशधातूत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहको व्यापारोऽभिधीयते ।निर्वाहकत्वं च स्वरूपसम्बन्धविशेषो नाऽतो नाशयतीत्यादावन्वयाऽनुपपत्तिः । एवं च पाकाऽऽदिकर्तुस्तत्कर्मत्वविरहेऽपि ण्यन्तधातुप्रतिपाद्यताऽवच्छेदककर्तृत्वस्य फलत्वेन तदाश्रयत्वात्पाकादिकर्तुः कर्मत्वं तादृशकर्तृत्वविशेषणतया सहायादिरूपस्वतन्त्रकर्तृवृत्तित्वविवक्षायां पाचयत्योदनं सहायमित्यपि प्रयोगः साधुरेव । अत एवाऽजिग्रहत्तं जनको धनुस्तदिति भट्टिप्रयोगः स्वरसतः सङ्गच्छते । भट्टेर्ज्ञानलाक्षणिकतया तदुपपादनं त्वगतिकगतिः यदा तु णिच्प्रकृत्यर्थव्यापारे स्वतन्त्रकर्तृवृत्तित्वस्याविशेषणतया विवक्षा तदा सहायेनेत्येव गतिबुद्धीतिसूत्रं गत्याद्यर्थकधातुयोगे तादृशकर्तृत्वविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षा नियता नाऽन्यत्रेत्यर्थबोधनद्वारा तत्र कर्तृप्रत्ययाऽसाधुत्वज्ञापकम् तेन पाचयत्योदनं सहायेनेतिवदजया ग्रामं गमयतीति न । एवं चाऽजां ग्रामं गमयतीत्यत्र ग्रामनिष्ठसंयोगाऽनुकूलव्यापारस्य यदजानिष्ठं कर्तृत्वं निर्वाहकत्वसम्बन्धेन तद्विशिष्टो यो व्यापारस्तदनुकूलकृतिमानिति बोधः। पाचयत्योदनं सहायेनेत्यत्र सहायकर्तृको यो विक्लित्त्यनुकूलो व्यापारो निर्वाहकत्वसम्बन्धेन तत्कर्तृत्वसम्बन्धेन तत्कर्तृत्वविशिष्टव्यापाराऽनुकूलकृतिमानिति बोधः।

कर्तृतृतीयाया आश्रयोऽर्थः । तथाहि स्वतन्त्रः

चैत्रेण ग्रामं गम्यतेऽजेत्यत्र कर्माऽऽख्याते तु तादृशव्यापारनिर्वाहकत्वं श्र
व्यापारनिर्वाहकत्वं त्वनिरूपकं यद्ग्रामवृत्तिसंयोगाऽनुकूलं गमनं तत्क-
र्माजेति बोधः। सहायेन पाच्यते तण्डुलश्चैत्रेणेत्यत्र तु चैत्रकर्तृकप्रेरणा
निर्वाहकत्वं स्वनिरूपको यः सहायरूपस्वतन्त्रकर्तृहस्तिव्यापारस्तज्जन्य
विक्लित्त्याऽऽश्रयस्तण्डुल इति बोधः।अर्थविवेकः स्वयमूह्यः। येत्वनुकूलव्या
पार एव णिजर्थस्तदन्वयिनी गमनादिक्रियैव धात्वर्थताऽवच्छेदकं फलं
तच्छालितयाऽजादीनां ग्राममिव कर्मत्वं गतिबुद्धीतिसूत्रेण नियम्यत
इति वदन्ति । तेषां मते पाचयत्योदनं सहायेनेत्यादौ द्वितीया तृतीययो
र्नियामकाऽलाभोऽधिकमन्यत्राऽनुसन्धेयमित्याहुः। वैकुण्ठमधितिष्ठतीत्या
दावपि द्वितीयाया आधार एवाऽर्थः अध्याद्युपसृष्टशीङादियोगेऽधिशी-
ङित्यादिसूत्रेणाधारस्यकर्मसंज्ञाविधानात् यद्यपि धात्वर्थव्यापारान्तर्भावे-
णाऽध्याद्युपसृष्टशीङादीनां लक्षणामुपगम्य कर्तुरीप्सिततममित्यनेनैव
कर्मसंज्ञा सुसाधा तथापि मुख्याऽर्थकतद्योगेऽपि कर्मप्रत्ययसाधुत्वबोध-
नार्थमधिशीङ्स्थासामित्यादिसूत्राणामप्यावश्यकतेति कर्मप्रवचनीय-
योगविहितविभक्तौ तु यथायथं लक्ष्यलक्षणभावादिः सम्बन्धो द्योत्य इति
वक्ष्यते ॥ उपपदविभक्तीनां तु षष्ठ्यपवादकत्वात्सम्बन्ध एवाऽर्थः कालाऽ
ध्वनोरत्यन्तसंयोग इति विहितद्वितीयाया व्यापकत्वमर्थः मासमधीत
इत्यादौ मासव्यापकाऽध्ययनमिति बोधात् द्वितीयाऽऽदीनामाश्रयोऽर्थ
इत्यत्र विभक्तिपदस्य कारकविभक्तिपरत्वेन तदविरोधादित्यन्यत्र विस्त-
रः। क्रमप्राप्तं तृतीयार्थं निरूपयति। कर्तृतृतीयाया इति। करणतृती-
याया व्यापाराऽर्थत्वस्याऽपि वक्ष्यमाणत्वादुक्तं कर्त्रिति । आश्रय इति ।
आश्रयमात्रमित्यर्थः । आश्रयार्थकत्वे मानमुपन्यस्यति । तथाहीत्यादि-
ना । ननु स्वातन्त्र्यमितरव्यापाराऽनधीनव्यापारवत्त्वम् तच्च काष्ठं पचती

कर्त्ता स्वातन्त्र्यञ्च धात्वर्थव्यापाराश्रयत्वम् ।

धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यतइति वाक्यपदीयात् ।

अतएव यदा यदीयोव्यापारोधातुनाऽभिधीयते

थादौ काष्ठादावप्रसक्तं तद्व्यापारस्य चेतनव्यापाराऽनधीनत्वादत आह। स्वातन्त्र्यञ्चेति । व्यापाराऽऽश्रयत्वस्य करणे धात्वर्थाऽऽश्रयत्वस्य कर्मण्यतिप्रसक्तत्वात्तद्व्यावृत्तये क्रमेणोभयम् । अत्र तु कर्तृप्रत्ययसमभिव्याहारे व्यापारताऽवच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाऽऽश्रयत्वं स्वातन्त्र्यं तदेव च कर्तृत्वं कालिकसम्बन्धेन व्यापाराऽश्रयेतिप्रसङ्गवारणाय व्यापारताऽवच्छेदकसम्बन्धेनेति ग्रामं गच्छतीत्यादावुत्तरसंयोगाऽत्मके फले तादृशधात्वर्थत्वाऽभावाच्च तदाश्रयेतिप्रसङ्गः पक्वस्तण्डुलो देवदत्तेनेत्यादौ फलस्य विशेष्यत्वेन देवदत्तेऽव्याप्तिपरिहाराय कर्तृप्रत्ययसमभिव्याहार इति सामग्री साध्यायां क्रियायां सर्वेषां स्वस्वव्यापारे स्वातन्त्र्येऽप्युक्तस्वातन्त्र्यस्य युगपत्सर्वेष्वभावान्न सूत्राऽनर्थक्यमिति कर्त्तुः कर्मप्रत्ययसमभिव्याहृतकर्तृव्यावृत्तत्वाद्धात्वर्थव्यापाराऽऽश्रयत्वस्यैव सम्यक्त्वे गुरुविशेषणस्याऽनतिप्रयोजनकत्वाच्चोपेक्ष्यं कर्मकर्त्तरि तु नव्यमते फले व्यापारत्वाऽऽरोपान्नाऽव्याप्तिः । व्यापारत्वेन क्वतेरपि सङ्ग्रहान्न तदनाश्रयेऽचेतने स्वरसतः कर्तृव्यवहारः। तदतिरिक्तव्यापारस्य धातुना विवक्षायां तु क्वचित्कर्तृत्वव्यवहारोऽपि । वक्ष्यति च यदायदीयो व्यापार इत्यादि एवमेव ततो भूतं न तु मया कृत मित्याद्युपपाद्यमिति भावः ।तत्र हरिवाक्यं प्रमाणयति । धातुनेति। उक्तक्रियइति । विशेषणादस्मदुक्तमेव स्वातन्त्र्यं हरिसम्मतमिति सूचयति ॥

अतएवेति । उक्तस्वातन्त्र्यस्य कर्त्तृत्वादेवेत्यर्थः । सङ्गच्छतेइति । भूतत्या-

तदा स कर्त्तेति स्थाली पचत्यग्निः पचति एधांसि पचन्ति तण्डुलः पच्यते स्वयमेवेत्यादि सङ्गच्छते। नन्वेवं कर्म्मकर्त्तृव्यपदेशाच्चेति सूत्रे मनोमयः प्राणशरीर इति वाक्यस्थमनोमयस्य जीवत्वे वाक्यशेषे तस्य एतमितः प्रेत्याभिसम्भवितास्मीति प्राप्तिकर्म्मत्वकर्त्तृत्वव्यपदेशो विरुद्ध इति भगवता व्यासेन निर्णीतं कथं सङ्गच्छताम्। उच्यते जीवस्यैव ज्ञेयत्वे प्राप्तिकर्म्मत्वमपि वाच्यम्। कर्त्तृत्वञ्च तस्य आख्यातेनोक्तम्। न चैकस्यैकदा संज्ञाद्वयं युक्तम् कर्त्तृसंज्ञया कर्म्मसंज्ञाया बाधात्। तथाचैतमिति द्वितीे-

श्रयत्वादेस्तत्त्वे तु तदसङ्गतिरिति भावः। उक्तविवक्षायाः प्रयोगनियामकत्वं दृढयितुं पृच्छति। नन्वेवमिति। एवं विवक्षाया एव प्रयोगनियामकत्वे मनोमयस्य मनोमयशब्दप्रतिपाद्यस्येत्यर्थः। जीवत्वे सङ्कल्पकर्त्तृरूपत्वे ब्रह्मभिन्नत्वे इति यावत्। एतमित इतयादेरितः शरीरात् प्रेत्य निःसृत्य एतच्छरीरं परित्यज्येति यावत्। एतं स्वप्रकाशत्वादिगुणविशिष्टं पूर्वोक्तमात्मानं अभिसम्भवितास्मि प्राप्तास्मीत्यर्थः। कथंसङ्गच्छतामिति। भवन्मते वैवक्षिकयोः कर्त्तृत्वकर्मत्वयोरेकस्मिन्नपिसम्भवादिति भावः। संज्ञानिबन्धनविरोधं समर्थयन् कर्त्तृत्वकर्मत्वयोर्वास्तवाऽविरोधं दर्शयति। उच्यतेइत्यादिना। जीवस्यैव ज्ञेयत्वेइति सक्रतुं कुर्वीतेत्यनेन जीवस्यैवोपास्यत्वबोधने इत्यर्थः। प्राप्तिकर्मत्वमिति। अन्योपासनाया अप्राप्यफलकत्वादिति भावः। आख्यातेनेति। अभिसम्भविताऽस्मीत्येतद्घट-

या न स्यात्। कर्म्मकर्तृतायाञ्च यगाद्यापत्तिरिति शब्दविरोधद्वारा भवति स भेदहेतुः। एवञ्च व्यापारांशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः। कारकचक्रप्रयोक्तृत्वं कृत्याश्रयत्वं वा दण्डः करोतीत्य

केनेत्यर्थः। बाधादिति। संज्ञयोराकडारीयतया समावेशाऽसम्भवेन परया कर्तृसंज्ञया बाधादित्यर्थः। यगाद्याऽऽपत्तिरिति। अभ्युच्चयवादः प्राप्ते कर्मवद्भावाऽप्रसक्तेः शब्दविरोधद्वारा एकदा संज्ञाद्वयप्रयुक्तकार्य्याऽनुत्पत्तिद्वारा सः संज्ञाद्वयविरोधः तत्र कर्तृकर्मत्वव्यवहारहेतुरित्यर्थः। न तु कर्तृत्वकर्मत्वयोः पारमार्थिकं भेदमादायेति भावः॥ ननु विशिष्टाश्रयस्य तावत्तृतीयाऽर्थत्वमायातमत आह। एवञ्चेति। धातूपात्तव्यापाराऽऽश्रयस्य कर्तृत्वे चेत्यर्थः। आश्रयमात्रमिति। अनन्यलभ्यत्वादिति भावः। मतान्तरं दूषयति। कृत्याश्रयत्वमित्यादिना। अव्याप्तमिति। अचेतने तस्यांस्तद्बाधादिति भावः। अत्र वदन्ति। दण्डाऽऽदिनिष्ठव्यापारस्य धात्वर्थव्यवहारस्तस्मिन् सूपपादः। अत एव हरिणा प्रागन्यतः शक्तिलाभान्न्यग्भावाऽऽपादनादपि तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्त्तनात्। अदृष्टत्वात्प्रतिनिधेर्व्यतिरेके च दर्शनात्। आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरिष्यते। इत्यनेन करणाऽऽदिव्यापारात्पूर्वं करणादिसम्पादकशक्तिमत्त्वेन करणादीनामात्माधीनत्वसम्पादनेन च तदायत्तव्यापारत्वेनाऽतिप्रवृत्तानां निवर्त्तनेन कर्तुः फलप्राप्तौ स्वत एव निवृत्त्या प्रतिनिध्यभावेन कारकान्तराभावेऽप्यस्त्यादौ कर्तुर्दर्शनेन च दूरादप्युपकारित्वे स्वातन्त्र्यमित्यर्थकेन कारकचक्रप्रयोक्तृत्वमेव स्वातन्त्र्यमभिहितम्। वस्तुत एषां धर्माणामभावेऽपि शब्दे यस्यैते प्रतिपाद्यन्ते स कर्त्तेति तदाशयः। पाचयति चैत्रेण मैत्र इत्यादौ प्रयोज्यस्य प्रयोजकव्यापाराऽधीनत्वेऽपि णिच्प्र-

कृत्यर्थसाधनान्तरविषये उक्तस्वातन्त्र्यस्य सत्त्वात्कर्तृत्वोपपत्तिः । धातुवाच्यक्रियाकृतस्वातन्त्र्यस्यैव विवक्षणात् कर्तृपरतन्त्रकरणादेर्न स्वव्यापारमादाय कर्त्तृत्वं प्रयोज्यस्य स्वार्थविचारमपि प्रवृत्तानां करणादीनां कर्त्रधीनत्ववत्प्रयोज्यस्य प्रयोजकाऽनधीनत्वाच्च न हि फलोद्देश्याऽधीना करणादीनां व्यापारवत्ता प्रयोज्यस्य तु ताद्दृशप्रवृत्तौ सर्वे इमे स्वभूत्यर्थं प्रवर्त्तन्त इति हेतुमतिचेतिसूत्रस्थं भाष्यमनुभवश्च सार्वजनीनः प्रमाणमित्याहुः । कृत्याश्रयत्वं दण्डादावव्याप्तमित्युक्त्या नैयायिकोक्तकर्त्तृत्वलक्षणोपि त्याज्यत्वमावेदितम् । तेषां त्वयमाशयः कर्त्तृत्वं मुख्यं पूर्वोक्तमेवाऽऽश्रयप्रतियोगित्वाऽऽदिरूपं तु गौणमुभयमपि कर्त्तृतृतीयया प्रतिपाद्यते तथाहि चैत्रेण पच्यत इत्यादौ कृतिमदभेदेन तज्जनकत्वं वा क्रियाविशेषणतया तृतीयया ऽभिधीयते॥ अचेतनकाष्ठादेरपि कर्त्तृत्वविवक्षायां तु काष्ठं पचतीतिवत्काष्ठेन पच्यते तण्डुल इत्यपिप्रयोगाद्व्यापाररूपे कर्त्तृत्वे तज्जनकत्वरूपे सकर्तृत्वे वा तस्य लक्षणा । एवं चैत्रेण ज्ञायत इत्यादावाश्रयत्वरूपे कर्त्तृत्वे आधेयत्वरूपे कर्त्तृमत्त्वे वा नश्यति घटेनेत्यादौ प्रतियोगित्वाऽऽत्मककर्तृत्वेऽनुयोगित्वरूपकर्तृमत्त्वे वा लक्षणा चैत्रः पचतीत्यादावुक्तस्थले कर्तृत्वमेव मुख्यं गौणं वा क्रियाविशेष्यतयाऽऽख्यातेन बोध्यते । अचेतने स्वरसतः कर्तृव्यवहाराऽभावेन तत्र कर्तृपदमपि भाक्तमेव । न च यत्नवत एव मुख्यकर्तृत्वे तदादायैव कर्तृकरणयोरित्यादेश्चारितार्थ्ये गौणकर्तृत्वे तृतीयाऽप्यनुपपत्तिरिति वाच्यम् । तत्सूत्रस्थकर्तृपदस्य पारिभाषिककर्तृपरत्वात् । तत्सूत्रप्रणयनस्यैव तत्परत्वे मानत्वात् । सूत्रे स्वातन्त्र्यं च समभिव्याहृतकारकान्तराऽनधीनत्वे सति कारकत्वम् । पुरुषव्यापाराऽधीनक्रियाऽनुकूलव्यापारवत्तामेव काष्ठाऽऽदीनामन्याऽनधीनत्वविवक्षया काष्ठं पचतीत्यादौ कर्तृत्वम् अनधीनत्वावविशेषणं च चैत्रः काष्ठैः स्थाल्यां पचतीत्यत्र चैत्रः काष्ठानि स्थाली पचन्तीति प्रयोगवारणाय चैत्रः पचति स्थाली पचतीत्यादौ

यत्र कारकान्तराऽप्रसिद्धिस्तत्राऽनधीनाऽन्तविशेषणं न प्रतीयत एव तन्नि
र्वाहस्य स्वतन्त्रशक्तिकल्पनात्। विशिष्टशक्तौ विशेषणाऽविषयकविशेष्यबो-
धाऽजनकत्वात् विशिष्टशक्त्या निर्वाहात् चैत्रेण पाचयतीत्यादौ हेतुक-
र्तृसमभिव्याहारे प्रयोज्यस्य हेतुकर्त्रधीनत्वेऽपि ण्यन्तप्रतिपाद्यपाचना-
दिक्रियायामिव प्रयोजकस्य कारकतया प्रयोज्यस्य पचाद्यर्थाऽक्रियाकार-
काऽनधीनतया अवैकल्येन न तद्वाचकपदोत्तरं तृतीयाऽनुपपत्तिः स्व-
तन्त्रकर्तृप्रयोजकव्यापारस्य तण्डुलक्रयणादिवत्पाकादावन्यथासिद्धत्वा-
दकारणत्वेन तस्य पाकाऽऽदिप्रयोजकव्यापारवत्त्वेऽपि तत्क्रियाकारक-
त्वाऽभावाच्च। अत एव चैत्रेण मैत्रः पाचयतीत्यत्र मैत्रः पचतीति न ।
नन्वस्तूपदर्शितरीत्या चैत्रादेः स्वतन्त्रकर्तृतानिर्वाहस्तथापि तद्वाचकप-
दोत्तरं तृतीयाऽनुपपत्तिः कर्तृत्वनिर्वाहकव्यापारस्य णिजर्थत्वेन स्वतन्त्र-
निष्ठस्य तस्य णिचाऽभिधानादिति चेन्न । कर्तृत्वनिर्वाहकत्वसम्बन्धेन
पाकाऽऽन्वितहेतुकर्तृव्यापारस्य णिजर्थतापत्तेऽदोषात्। कर्तृत्वरूपफ-
लाऽवच्छिन्नव्यापारस्य णिजर्थतामतेऽपि तदुपरक्ताऽऽश्रयस्याऽन्यतो भा-
नाऽनिर्वाहेणाऽनभिधानस्याऽक्षतत्वात् अबोधनस्यैव तत्राऽनभिधानप-
दार्थत्वादभिधानस्य लिङ्कृत्तद्धितसमासैरिति परिगणनाच्च। आख्यातस्य
धर्म्यवाचकत्वेऽपि कृत्यादिविशिष्टकर्तृबोधकत्वरूपाऽभिधानस्य तत्र स-
त्त्वान्न चैत्रः पचतीत्यादौ तृतीयाऽऽपत्तिः मुख्यविशेष्यतया तद्विवक्षायां
चैत्रेण पचतीत्यादिप्रयोगापत्तिरित्यपि न आश्रयातिरिक्ते विशेषणतया
कृतिबोधनस्यैवाऽनभिधानपदार्थत्वात्तथाऽभिधानं च तङ्कृत्तद्धितसमासै-
रेवेति त एवाभिधायकतया वृत्तिकृतोपात्ताः। यद्यपि स्वतन्त्रव्यापार
एव तृतीयादेरनुशासनम् तथापि कृतिरूपकर्तृत्व एव लाघवाच्छक्तिर्व्या-
पारादौ तु लक्षणैर्युक्तमनुशासनस्याऽनादितात्पर्य्यमात्रग्राहकत्वाल्लाघव
सहकृतस्यैव तस्य शक्तिकल्पकत्वात् व्यापारे तत्सत्त्वेऽपि गौरवेण तद-
सिद्धेः। एवं च कृतिरूपकर्तृत्वबोधस्थले कारकान्तरव्यापाराऽनधीनत्वं

त्नादयापूतम्। अयञ्च त्रिविधः शुद्धः प्रयोजको हेतुः कर्म्मकर्त्ता च। मया हरिः सेव्यते। कार्य्यते हरि-

न प्रतीयत एवेति न तदन्तर्भावेण शक्तिः प्रमाणाऽभावात् व्यापारत्वाक्षे-पिककर्तृप्रत्ययेन लक्षणया न तदन्तर्भावेण व्यापारबोधनादेव पूर्वोक्ताऽतिप्रसङ्गस्य वारणात्। अन्यथा तदन्तर्भावेण कृतौ शक्तावपि पूर्वोक्ताऽतिप्रसङ्गस्य दुःपरिहरत्वात् घटो जायते ओदनः सिद्ध्यतीत्यादौ घटादेः कारकत्वं कर्तृत्वं च सत्कार्यवादमवलंब्यैवोपपादनीयम् मुख्यं क्रियाकर्तृत्वं च न तदनुकूलकृतिमात्रम् एकक्रियाविषयककृतेर्यत्ननान्तरीयकक्रियानिर्वाहकस्तत्र तत्क्रियाकर्तृत्वाऽव्यपदेशात् किं तु तत्क्रियाविषयकत्वे सति तदनुकूलनाराचक्षेपरूपव्यापारस्य कृतिविषयत्वेऽपि हि सा लक्षणस्योद्देश्यता घटिततया तस्य विप्रमरणाऽनुकूलव्यापारत्वेनाऽनभिसंहितत्वात्तेन रूपेण कृतिविषयत्वस्य तादृशव्यापारेऽसत्त्वेन न ब्राह्मणत्वविशिष्टवधकर्तृत्वं तादृशव्यापारकर्त्तुरिति न सम्पूर्णं प्रायश्चित्तं तस्येति॥ कर्तृविभागमाह। अयञ्चेति। अनुपदं तृतीयार्थत्वेन निरुक्तः कर्त्तेत्यर्थः। शुद्धइति। हेतुत्वकर्मकर्तृत्वाऽनधिकरणमित्यर्थः। प्रेरणार्थकणिजप्रकृतिधातूपात्तव्यापाराऽऽश्रय इति यावत्। हेतुरिति। णिजर्थप्रेरणाऽऽश्रय इत्यर्थः। कर्मकर्त्तेति। धातूपात्तव्यापाराऽऽश्रयत्वे सति णिजर्थव्यापारेणाऽऽप्यमानत्वेन विवक्षित इत्यर्थः। क्रमेणोदाहरणान्याह। मया हरिःसेव्यतइत्यादिना। अत्र व्यापारविशेष्यकबोधोल्कीर्त्तनं तु कैयटाऽऽनुसारेण तत्त्वं तु प्रागेवाऽवोचाम। आश्रयव्यापाराविति। ननु व्यापारस्य धातुनैव लाभात्तत्र शक्तिकल्पनमपार्थमितराशङ्कां कस्य कर्तृनिष्ठव्यापारस्य धातोर्लाभेऽप्यनुभूयमानकरणनिष्ठव्यापारस्य पदार्थत्वमन्तरेणशाब्दविषयताऽनुपपत्त्या शक्तिरावश्यकी आख्यातान्निष्ठत्तिभेदाया एव क्रियाय अवगमाद्व्यापारद्वयस्य धात्वर्थत्वाऽसम्भवाच्चेत्यभिप्रेत्य स्वोक्ताऽर्थस्य प्रमा

णा । गमयति कृष्णं गोकुलम् । मदभिन्नाश्रयको हरिकर्म्मकसेवनानुकूलोव्यापारः । हर्य्यभिन्नाश्रयकउत्पादनानुकूलोव्यापारःगोकुलकर्मकगमनानुकूल कृष्णाश्रयकतादृशव्यापारानुकूलो व्यापार इति शाब्द बोधः । करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ । तथाहि साधकतमं करणम् । तमबर्थः प्रकर्षः स चाव्यवधानेनफलजनकव्यापारवत्ता । तादृशव्यापारवत्कारणञ्च करणम्। उक्तञ्च वाक्यपदीये ।

एतां दर्शयितुं करणसंज्ञाप्रतिपादकं सूत्रमुपन्यस्यति।तथाहीत्यादिना।साधकमिति सूत्रस्य कारकाऽधिकारीयत्वात्साधकशब्दादेव प्रकर्षलाभेऽपि गौणाऽऽधाराऽधिकरणसंज्ञाफलकस्य कारकप्रकरणे शब्दसामर्थ्यं गम्यः प्रकर्षो नाश्रीयत इत्यर्थस्य बोधनाय तमबुपादानमिति सूचयन्नाह।तमबर्थः प्रकर्षइति । प्रकर्षश्च कारकाऽन्तरापेक्षो न तु करणाऽन्तरापेक्षः कारकसामान्यवाचिसाधकशब्दादुत्पन्नेन तमपा तदवधिकप्रकर्षस्यैव द्योतनात् तेनाश्वेन दीपिकया व्रजतीति प्रयोगोपपत्तिः। अन्यथा करणाऽन्तराऽपेक्षिकप्रकर्षस्य करणाऽन्तरेऽभावेन तदनुपपत्तेः ।तादृशेति । फलोत्पत्त्यव्यवहित पूर्ववर्त्तीत्यर्थः।परे तु फलाऽयोगव्यवच्छिन्नकारणत्वं करणत्वं तद्व्याप्ये तत्र यावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फलनिष्पत्तिस्तत्त्वमिति यावत् स एव तृतीयार्थः सत्यंतनिवेशाच्चक्षुषोऽन्धकारे फलाऽयोगेऽपि न तत्राऽप्रसङ्गः प्रयोजकेऽतिप्रसङ्गनिरासायाऽव्यवहितेति वदन्ति। तत्र हरिसम्मतिमप्याह । उक्तञ्चेति । अत्र क्रियावदं फलपरम् बाणेन हत इत्यत्र बाणव्यापाराऽव्यवहितोत्तरक्षणे प्राणवियोगरूपफलाऽवश्यम्भावात्करणत्व-

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम् ।
वस्तुतस्तदनिर्द्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यतइत्येषा विवक्षा दृश्यते यतइति ।

विवक्ष्यतइत्यनेन सकृदनेकेषां तदभावाद्द्वितीयासप्तम्यादेरवकाशं सूचयति । नचैवं कर्त्ता शा-

स्न्वयः । विवक्ष्यते इत्यनेन विवक्षैव विभक्तौ प्रयोजिका न वास्तवकरणत्वादिसत्त्वेत्युक्तम् । अत एव दात्रेऽनादरेण बलस्य तत्त्वविवक्षायां बलेन लुनातीति प्रयोगः ॥ वस्तुतइति ॥ यत इदमेव वस्तुकरणमिति न नियमोऽत एव निश्चिताऽधिकरणत्वापि स्थाली तनुतरकपालत्वाद्वैवच्छिककरणत्ववतीत्यर्थः । अवकाशमिति । तण्डुलं स्थाल्यां पचतीत्यादौ करणत्वाऽविवक्षायां न तत्संज्ञाप्रयुक्तद्वितीयादेरवकाशमित्यर्थः । तथा च काष्ठैः पचतीत्यादौ प्रकृत्यर्थकाष्ठादेरभेदेनाऽऽश्रयरूपतृतीयाऽर्थेऽन्वयः । तस्य च व्युत्पत्तिवैचित्र्येण समानप्रत्ययोपात्तत्वप्रत्यासत्त्या व्यापाररूपतदर्थान्तरे आधेयतासम्बन्धेन विक्लित्यनुकूलव्यापारे। एवं च काष्ठाऽभिन्नाश्रयको यः फलोपहितव्यापारस्तद्विशिष्टो विक्लित्त्यनुकूल एकाऽऽश्रयको वर्त्तमानो व्यापार इति बोधः । वैशिष्ट्यं च जन्यजनकभावसम्बन्धेन बोध्यम् अत्र च यत्सन्निहितेषु सर्वेषु कारकेषु कर्त्ता प्रवर्त्तयिता भवतीति सकलकारकव्यापारस्य कर्त्रधीनत्वप्रतिपादकं कारकइतिसूत्रस्थं भाष्यं प्रमाणम् । अपरे तु क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरमिति वाक्यस्थाऽनन्तरपदस्वारस्यात्तृतीयार्थव्यापारस्य जन्यतासम्बन्धेन काष्ठाऽऽश्रयकव्यापारविशिष्टफलाऽनुकूलोव्यापार इति बोधमाहुः । तृतीयार्थकरणत्वस्य व्यापार एवाऽन्वयः शब्दशक्तिस्वभावात् फलांशेऽ। एव-

स्त्रार्थवत्त्वात् इत्युत्तरमीमांसाधिकरणे शक्तिविपर्य्य यादिति सूत्रेणान्तःकरणस्य कर्तृत्वे करणशक्तिविप र्य्ययापत्तिरुक्ता न युज्येतेति वाच्यम्। तदेतेषां प्रा-

मत्वर्थलक्षणया सोमादिपदस्य नामधेयत्वं सिद्धान्तितम्। अन्यथा व्या- पारं प्रति करणत्वेनाऽन्विते फलांशे करणत्वेनाऽन्वयोपपत्तौ लक्षणाया अप्रसङ्ग एव। अत एव सोमेन यजेतेत्यत्र मत्वर्थलक्षणेऽति मीमांसकाइ त्यनेन। वस्तुतस्त्वाश्रयो वधिकरणं श्च इति मूलस्वारस्यात्करणतृतीयायाअप्या श्रयमात्रमर्थः प्रकृत्यर्थान्वितस्य स्वनिष्ठव्यापारजनकत्वसम्बन्धेन धात्वर्थव्या पारेऽन्वय इत्येव न्यायः। नैयायिकास्त्वसाधारणं कारणं करणम्। कारणे असाधारण्यं च व्यापारवत्त्वमेव। न तु फलाऽयोगव्यवच्छिन्नत्वम्। तस्य यावत्कारणघटितया गौरवेण तद्धर्माऽवच्छिन्ने शक्त्यसिद्धेः। स एव च प्रकर्षस्साधकतममिति तमपा बोध्यते व्यापारमात्रं करणतृतीयार्थः त- स्मिन्प्रकृत्यर्थस्याऽऽधेयतासम्बन्धेनाऽन्वयः शेषं पूर्ववदित्याहुः। एवमिति। एकस्मिन्नपि धर्मिणि कर्तृत्वकरणत्वयोरङ्गीकारे कर्तृकरणशक्त्योरविरो- ध इति यावत्। शक्तिविपर्य्ययादिति। एष हि द्रष्टा श्रोताऽनुमन्ता बोद्धा विज्ञानाऽऽत्मा पुरुष इत्यादीनां तथा कर्तुः कर्तव्यविशेषप्रतिपादकानां यजेत जुहुयादित्यादीनां च सार्थक्याय जीवस्य कर्ता शास्त्रार्थवत्त्वादि- त्यनेन कर्तृत्वबोधिते बुद्धिपदव्यवहार्य्ये विज्ञानमेवाऽस्तु कर्त्रित्याशङ्का- यां विज्ञानशब्दवाच्यबुद्धेः कर्तृत्वाऽभ्युपगमे लोके समर्थस्याऽपि कर्तुः सर्वोऽर्थकारिकरणान्तरसापेक्षस्यैव कार्य्यकारित्वदर्शनेन विज्ञानपदव्यप- देश्यत्वबुद्धेः करणशक्तिहान्यापत्तिरतस्तदतिरिक्तजीवस्यैव कर्तृत्वमुचित मित्यर्थप्रतिपादकेन शक्तिविपर्य्ययादिति सूत्रेणेत्यर्थः। नयुज्येतेति। कर्तृकरणशक्त्योरविरोधस्यैव भवद्भिरभिधानादिति भावः॥तदेतेषामिति॥ प्राणानां इन्द्रियाणां विज्ञानं ग्रहणशक्तिं विज्ञानेन विज्ञानशब्दवाच्येन

णानां विज्ञानेन विज्ञानमादायेति श्रुत्यन्तरे करणतया कुप्तस्यकर्तृतां प्रकल्प्य शक्तिविपर्य्ययापत्तिर्निष्प्रमाणा कल्प्येतेत्यभिप्रायात्। वस्तुतस्तु अन्वाचयमात्रमेतदिति यथा च तथोभयथा, इत्यधिकरणे,

मनसा तज्जन्यबुद्ध्यात्मकप्रवृत्त्येति यावत्। आदाय गृहीत्वा हृदयं क्वापि गच्छतीति श्रुत्यर्थः। करणतयेति। विज्ञानेनेत्यत्र करणतया क्लृप्तस्येत्यर्थः। निष्प्रमाणेत्यादेः कर्त्तरि करणशक्तिस्वीकारेऽपि द्वयोः शक्त्योरेकदा विवक्षायामसम्भवेन विज्ञानं यज्ञं तनुते इत्यादौ कर्तृत्वविवक्षायां करणशक्तिविवक्षाप्रयुक्तविज्ञानेनेति तृतीयान्तनिर्देशाऽऽपादनाऽसम्भवेन तद्विपर्ययसङ्गाभावादितत्राशयादितत्यर्थः। नन्विदमयुक्तम् अपादानप्रतिपादकग्रन्थस्यैवाऽऽपत्तौ अप्रामाण्यप्रतिपादकत्वाऽसम्भवात् आपत्तेः प्रात्तन सूत्रादप्रक्रान्तत्वाच्च तत्र आह। वस्तुतस्त्विति। अन्वाचयमात्रमेतदिति। एतत् शक्तिहान्यापत्तिरूपं दूषणं मात्रपदेन तात्पर्यविषयत्वस्य व्यवच्छेदः। अन्वाचयत्वं च तात्पर्य्यज्ञानविषयाऽर्थसन्निहितत्वम् उपेक्षाविषयत्वं वा। तच्च बुद्धेः करणशक्तिविपर्ययेऽस्ति दृष्टान्तप्रतिपादकसूत्राद्बुद्धेःकर्मत्वनिरासस्यैव मुख्यत्वाऽवगतेरिति भावः भूषणे तु तदेतेषामितत्राद्यभिप्रायादित्यन्तः पाठो नास्त्येव किं तु नन्वेवं कर्त्तत्वादि न युज्येतेति चेत्तत्रम् अन्वाचयमात्रमेतदिति पाठः। अन्वाचयेति विज्ञानशब्दार्थस्य जीवत्वे शक्तिविपर्य्ययाऽऽपत्तिः सम्भाव्यते न तु निर्भरस्तत्रेतत्यर्थः। उपाधिवशेन परमात्मन्येव तत्सम्भवादिति भावः। तदेव विशदयति। यथाचेति। सूत्रे च शब्दस्त्वर्थे पराऽभिमतबुद्धिकर्तृत्वनिरासाऽर्थः नहि परमात्मनोऽन्यो जीवो नाम कर्त्ता भोक्ता वा सम्भवति नित्यशुद्धमुक्तात्मनः कर्तृत्वाऽऽद्यसम्भवादनिर्मोक्षप्रसङ्गाच्च किं तु ध्यायतीव लेलायतीवेति श्रुतेरध्यस्तं तत्तत्र वाच्यम्। अविद्योपस्थापितं तत्परस्याऽपि सम्भवति

भाष्य एव स्पष्टम् । इत्यादि प्रपञ्चितं भूषणे । सप्तम्या अप्याश्रयोऽर्थः । सप्तम्यधिकरणेच इत्यधिकरणे सप्तमी । तच्च आधारोऽधिकरणमितिसूत्रादाधारः । तत्वञ्चाश्रयत्वम् । तत्राश्रयांशः शक्यः तत्त्वमवच्छेदकम् । न चाश्रयत्वमात्रेण कर्म्मकर्त्तृकरणानामाधारसंज्ञा स्यात् । स्यादेव यदि ताभिरस्या

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीति विद्याऽवस्थायां तु तदभावो यत्र तु सर्वमात्मैव स्यात्तत्किं केन पश्येदिति श्रुतिः यथा तच्चा वा स्यादिकरणहस्तः कर्त्ता दुःखी भवति स एव गृहस्थो विमुक्त वास्यादिनिर्व्यापारः सुखी भवतीति तदर्थः । तथा च शक्तिविपर्ययादितरस्य पराऽभ्युपगतबुद्धिकर्तृत्वनिरासे तात्पर्यं न तु बुद्धेः कर्तृत्वेन करणशक्तिपरित्याग इति न तद्विरोध इति भावः ॥

॥ सप्तम्यर्थन्निरूपयति ॥

सप्तम्याअपीति । ननु तावता सूत्रादाधारवाच्यत्वं लभ्यते नाऽऽश्रयस्येत्यत आह । तत्त्वञ्चेति । आधारत्वं चेत्यर्थः । आश्रयत्वमिति । आश्रयत्वविशिष्टत्वमित्यर्थः । विशिष्टे सूत्रेण शक्तिबोधनेऽप्याश्रयांश एव सा न तु विशेषणीभूताऽऽश्रयत्वेऽपि तत्प्रकारकशाब्दबोधे आश्रयशक्तिज्ञानस्य हेतुताकल्पनयैव तज्ज्ञानोपपत्तेरित्याशयेनाऽऽह । तत्राऽऽश्रयांशः शक्य इति । यद्वा ननु तावता परम्परया क्रियाऽऽश्रयस्य सप्तम्यर्थत्वं लब्धं नाऽऽश्रयमात्रस्येत आह । आश्रयांशइति । पूर्वोक्तरीत्या क्रियायाः धातोरेव लाभादनन्यलभ्याऽऽश्रय एव शक्य इत्यर्थः । तत्त्वं आश्रयत्वमात्रं चेति शक्यताऽवच्छेदकस्य कर्त्रादिसाधारण्यात् करणतृतीयायाश्च व्यापारोऽपीत्यपिनाऽऽश्रयार्थत्वप्रतिपादनादिति भावः ।

न बाधः स्यात्। कारके इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रयइत्येवं यद्यपि तात्पर्य्यं तथाप्यत्र कर्त्तृकर्म्मद्वारा तदाश्रयत्वमस्त्येव स्थाल्यादेर्भूतलकटादेश्चेति स्थाल्यां पचति भूतले वसति कटे शेते इत्याद्युपपद्यते। उक्तञ्च वाक्यपदीये।

कर्त्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।
उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।

एतच्च त्रिविधम्। औपश्लेषिकं वैषयिकमभि-

कर्त्तृकर्मद्वारेति। एतादृशाऽर्थलाभश्च तत्सूत्रसामर्थ्यादेव तथाहि कारकाधिकारीयेणैतेन क्रियाऽन्वय्याधारस्याऽधिकरणसंज्ञा विधीयते क्रिया च धात्वर्थः साक्षात्तदाधारयोः पराभ्यां कर्त्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिदं सूत्रमनवकाशं सत् परम्परया धात्वर्थाऽऽश्रयस्याऽधिकरणसंज्ञाविधानेन चरितार्थं परम्पराघटके च कर्त्तृकर्मणी एवेति परया कर्मसंज्ञया बाधादेव मोक्षे इच्छास्तीतिवन्मोक्षं इच्छति भवतीति न प्रयोगः॥ औपश्लेषिकमिति। सामीप्यसम्बन्धनिबन्धनमित्यर्थः। सामीप्यस्याऽपि संयुक्तसंयोगरूपतया संयोगपदेन तस्याऽपि सङ्ग्रहात् आधेयव्याप्यताऽवच्छेदकयावदवयवकमित्यर्थः। तत्राऽद्यस्य कटे शेते गुरौ वसतीत्युदाहरणे द्वितीयस्य मोक्षे इच्छास्तीति अन्त्यस्याऽन्त्यं कटे शेत इत्यत्र परम्परया कटाऽभिन्नाऽऽश्रयकः शयनाऽनुकूलो व्यापार इति बोधः एवमन्यत्राऽप्यूह्यम्। भाष्येस्पष्टमिति। तत्र हि संहिताधिकारखण्डनाय संयोगः शक्योऽवक्तुं अधिकरणं नाम त्रिप्रकारं व्यापकमौपश्लेषिकं वैषयिकमिति इक्शब्दस्याऽच्छब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात् इको यणचि उपश्लिष्ट

व्यापकञ्च। कटे शेते, गुरौ वसति, मोक्षे इच्छाऽस्ति। तिलेषु तैलमिति। एतच्च संहितायामिति सूत्रे भाष्ये स्पष्टम्।

ष्येति तत्राऽन्तरेण ग्रहणं संहितायामेव भविष्यतीत्युक्तम् अत्रोपश्लिष्टपदाऽध्याहारेण सप्तमीत्यर्थे इदमेव भाष्यं मानं संहितायामित्युपलक्षणं तत्र च दीयते कार्यं भववदित्यादिसूत्रस्थभाष्यस्याऽपि तत्राऽधिकरणार्थे विषयप्रतिपादनादिति। नैयायिकास्तु संयोगेनाऽऽधारः समवायेनाऽऽधार इत्याद्यनुगतप्रतीतिबलादाधारत्वमखण्डोपाधिः संयोगादिरूपं तु न तत् कुण्डसंयोगिनो वदरादेरपि कुण्डाधारतापत्तेः। ननु वदरप्रतियोगिकत्वविशिष्टसंयोगाऽनुयोगितायाः कुण्डाऽऽधारताव्यवहारनियामकत्वाऽभ्युपगमान्नोक्तदोषो न वा कुण्डे कुण्डसंयोगाऽनुयोगितासत्त्वेऽपि कुण्डे कुण्डमिति प्रतीत्याऽऽपत्तिः कुण्डप्रतियोगिकत्वविशिष्टसंयोगाऽनुयोगितायास्तत्र विरहादिति चेदेवमपि मल्लं मल्लाऽन्तरसंयोगसत्त्वे उक्तानुयोगिताश्रयत्वे मल्ले मल्ल इति व्यवहाराऽऽपत्तेरनन्यवारणत्वेनोक्तप्रकारस्यैवाऽनुसर्त्तव्यत्वात्तथा च तादृशमाधारत्वमाधेयत्वं वा सप्तम्यर्थः। कस्याऽऽधारत्व इत्याकाङ्क्षायां क्रियानिरूपितस्य तस्य बाधादुपस्थितत्वात्कर्त्तृकर्मणोराधार एव सेति तयोरेव तदन्वयः भूतले घट इत्यादौ न यद्यपि क्रियाश्रवणं तथाऽपि कारकत्वनिर्वाहाय तदध्याहारस्याऽऽवश्यकता ईदृशस्थले परम्परासम्बन्धस्याऽपि क्रियाऽन्वयित्वरूपकारकत्वघटकतायास्तप्रामाण्यादत एवाऽक्षशौण्ड इत्यादौ सामर्थ्योपपत्तिरेवं च भूतले घटोऽस्तीत्यत्र भूतलवृत्तिघटो वर्त्तमानसत्ताऽऽश्रय इति बोधः नञ्समभिव्याहारे तु तादृशसप्तम्यर्थाऽभावो घटांऽशे भासत इत्याहुः॥

॥ पञ्चम्यर्थं निरूपयति॥

अवधिः पञ्चम्यर्थः। अपादाने पञ्चमी। तच्च ध्रुवमपायेऽपादानमिति सूत्रात् (अपायः) विश्लेषस्तज्जनकक्रिया तत्रावधिभूतमपादानमित्यर्थकादवधिभूतमिति भावः। उक्तञ्च वाक्यपदीये।

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते।
पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते।
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्म्मके।
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते।
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक् इति।

अस्यार्थः(अपाये) विश्लेषहेतुक्रियायाम्(उदासीनम्)

अवधिः पञ्चम्यर्थइति॥ विश्लेषइति। विभाग इत्यर्थः॥ अवधित्वं च प्रकृतधात्वर्थविभागजनकतत्क्रियाऽनाश्रयत्वे सति प्रकृतधात्वर्थविभागाऽऽश्रयत्वम् करणाऽऽदिकारकेऽतिव्याप्तिवारणाय विशेष्यं यत्किञ्चित् क्रियाजन्यविभागस्य तत्राऽपि सत्वादतिप्रसङ्गतावदवश्यमतस्तद्विशेषणं प्रकृतेति। एवं च वृक्षात्पततीत्यादौ विभागजनकक्रिया पतत्यर्थः। यद्यपि यत्र धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयमिति अधिकं हरिपद्यव्याख्याऽवसरे ग्रन्थकृतैव स्फुटीकरिष्यते॥ उदासीनम्। विभागजनकक्रियाऽनाश्रयः तद्वैविध्यमाह। चलमित्यादि। चलोऽश्वादिरचलो वा-

अनाश्रयः । (अतद्भावेशात्) तत्क्रियानाश्रयत्वात् । एवं च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं फलितम् । वृक्षात्पर्णं पततीत्यत्र पर्णस्य तद्वारणाय सत्यन्तम् । धावतोऽश्वात्पततीत्यत्राऽश्वस्य क्रियाऽऽश्रयत्वाद्विश्लेषहेत्त्विति कुड्यात्पततोऽश्वात्पततीत्यत्राऽश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्न विरुद्धमित्याह यस्मादश्वादिति ।

तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः । एवमन्यनिष्ठक्रियानाश्रयत्वात्कुड्यादेरपि ध्रुवत्वमित्याह तस्यापीति । उभयकर्मजविभागस्थले विभागस्यैक्यात्तद्विश्लेषजनकक्रियानाश्रयत्वाभावात्परस्परान्मेषावपसरतइति न स्यादित्याशङ्क्य समाधत्ते उभावपीति । मेषान्तरेति । यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेष-

मादिः । तत्क्रियानाऽऽश्रयत्वादिति । तद्विभागजनकतत्क्रियाऽनाविष्टत्वादित्यर्थः । क्रियाश्रयत्वादिति । तथाचाऽव्याप्तिरिति भावः । विशेषणीयमिति । तथा च विभागस्तत्तद्व्यक्तित्वेन निवेशनीय इति भावः । समाधत्ते ।प्रविभक्तेति तत्रादिना। तत्तन्मेषवृत्तित्वविशिष्टत्वेन भिन्नतयाऽवगत इत्यर्थः । व्यवस्थितेइति । तत्तन्मेषवृत्तित्व विभागजनकक्रिये तत्तन्मेषाऽनाश्रिते भवत एवेत्यर्थः । तदेवाऽऽह । मेषान्तरक्रियापेक्षमित्यादि

स्यापसरणमेषक्रियामादाय ध्रुवत्वम् तथात्रापि त्रिभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति। तथा च विश्लेषाश्रयत्वे सति तज्जनकतत्क्रियानाश्रयत्वं तत्क्रियायामपादानत्वं वाच्यम्। क्रिया चात्र धात्वर्थो न तु स्पन्दः। तेन वृक्षकर्म्मजविभागवति वस्त्रे वृक्षाद्वस्त्रं पततीति सङ्गच्छते।

परस्परपदोपात्तयोरपादानत्वम् तत्तत्क्रियाऽऽश्रयत्वान्मेषपदोपात्तयोः कर्तृत्वञ्चोपपद्यत इत्यर्थः॥ तत्तद्व्यक्तित्वेनाऽपि धात्वर्थक्रियाविशेषणीयेत्याह। क्रियाचेति। वृक्षकर्मजविभागवति वस्त्र इत्युक्त्या वस्त्रद्वारकसम्बन्धेन क्रियान्वयित्वं वृक्षस्य सूच्यते क्रियाजनकत्वं कारकत्वमिति मते तु तत्र वृक्षस्याऽऽपादानत्वं दुरुपपादमेव। सङ्गच्छत इति। तादृशवृक्षनिष्ठक्रियायाः प्रकृतपतधात्वर्थत्वाऽभावेन तद्वति वृक्षे नाऽव्याप्तिरिति भावः। अत्र वदन्ति। पञ्चम्या आश्रय इव विभागोऽप्यर्थोऽविभागार्थकपतत्यादि समभिव्याहारे करणतृतीयाया व्यापार एव अनेकधातूनां विभागे शक्तिकल्पनाऽपेक्षया एकस्याः पञ्चम्यास्तत्र शक्तिकल्पनायां लाघवात् विभागस्य धात्वर्थत्वे द्वितीयादिस्थल इव विभागस्य धातुना लाभादाश्रयमात्रं पञ्चम्यर्थ इत्येव ब्रूयात् अवधेराश्रयात्पृथगुपादानवैयर्थ्यात्यजिपत्योः पर्यायतापत्तेश्च प्रकृतेऽधोदेशसंयोगाऽनुकूलक्रियैव पतत्यर्थः अधोदेशस्य संयोगांऽशे उपलक्षणम् गम्युपात्तसंयोगफल उत्तरदेशवत् विभागाऽधीनपूर्वदेशसंयोगनाशमन्तरेण क्रियायाः संयोगजनकत्वाऽसम्भवात्तस्याऽविभागजनकत्वमर्थलभमेव समानप्रत्ययोपात्तत्वप्रत्यासत्त्या व्युत्पत्तिवैचित्र्येणाऽऽश्रयरूपपञ्चम्यर्थस्य विभागरूपाऽपरतदर्थे आधेयतयाऽन्वयस्तस्य चाऽनुकूलतासम्बन्धेन पतत्यर्थक्रियायाम्। एवं च विभागस्य

धात्वर्थत्वाऽभावान्न कर्मताप्रसङ्गोऽपि । यद्वा अवधिरित्यनुगतव्यवहारादवधित्वमाश्रयत्वव्याप्यमखण्डोपाधिस्तदवच्छिन्न एव पञ्चम्यर्थः । अत एवाऽवधेराश्रयात्पृथगुपादानम् ॥ तस्य च स्वनिष्ठाऽवधित्वनिरूपकविभागजनकत्वसम्बन्धेन क्रियायामन्वयः । एवं च पूर्वकल्पे वृक्षात्पर्णम्पततीत्यत्र वृक्षाऽभिन्नाऽऽश्रयकविभागजनकपर्णाऽऽश्रयकसंयोगाऽनुकूलव्यापार इति बोधः । द्वितीये तु वृक्षाऽभिन्नाऽवधिविशिष्टा तादृक्क्रियेति विभागजन्यसंयोगो विभागजनकक्रियाया न पतत्यर्थः पत्लृगतावित्यनुशासनाद्गतिशब्दस्य गम्लृगतावित्यादौ संयोगाऽनुकूलव्यापार एव प्रसिद्धेः । तत्रजर्थगतिव्यवहाराऽभावाच्च फलाऽवच्छिन्नव्यापारे व्यापाराऽवच्छिन्नफले च धातोः शक्तिमङ्गीकुर्वतो स्वोक्तफलत्वाऽनाक्रान्तविभागस्य धात्वर्थव्यापाराऽवच्छेदकत्वाऽसम्भवाच्च । पततेः संयोगरूपफलाऽर्थकत्वे ग्रामं गच्छतीतिवद्ग्रामं पततीत्यापत्तिरिति तु न शब्दशक्तिस्वाभाव्येन तदुपस्थितसंयोगस्याऽधोदेश एवान्वयात् । ग्रामस्य तत्त्वे तु विहगो ग्रामं पततीतीति त्विष्टमेव । अत एव नरकं पतित इति विग्रहे द्वितीयाश्रितेति पतित शब्दयोगे द्वितीयासमासविधानं सङ्गच्छते । न च वृक्षमजहत्यपि पर्णे भूमिं स्पृशति वृक्षात्पर्णं पततीत्यापत्तिः । तदुपस्थाप्यक्रियाजन्यदेशाऽन्तरविभागे वृक्षावधिकत्वाऽनुपगमात् । अन्यथा क्रियाजन्यसंयोगमात्रस्यैव विभागजन्यत्वेन भूमिपर्णसंयोगस्याऽपि तथात्वात्स्वमतेऽपि तादृशप्रयोगस्य दुर्वारताऽऽपत्तेः । अत एव गतिर्विनात्ववधिना नाऽपाय इति कथ्यते वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितमित्यवध्यन्वययोग्यभागाऽनुकूलत्वं विना संयोगजनिका क्रिया नाऽपायः । अत एव पर्णं विशेषणतया वृक्षविवक्षायामपायस्याऽविवक्षणाद्वृक्षस्य पर्णम्पततीत्यत्र भाष्ये पष्युक्तेत्येतदर्थकं हरिणोक्तम् । यत्र च गृहादपसरतीत्यादौ विभाग एव धात्वर्थस्तत्राऽऽश्रयोऽवधिमात्रं वा पञ्चम्यर्थः । तस्याऽऽधेयतया स्वनिष्ठाऽवधित्वनिरूपकत्वेन वा यथायथं विभागेऽन्वयः परस्पर

वस्तुतो नैतावत्पञ्चम्या वाच्यम् । किन्तु अवधेर्लक्षण मात्रं द्वितीयार्थोक्तरीत्या प्रयोगातिप्रसङ्गस्यासम्भवेन वाच्यकोटौ प्रवेशस्य गौरवेणासम्भवादिति तु प्रतिभाति । न चैवमपि वृक्षात् स्पन्दत इति स्यादिति शङ्क्यम् आसनाच्चलितः राज्याच्चलित इति वदिष्ट

स्वान्मेषादपसरत इत्यादौ तु मेषपदवाच्यत्वावच्छेदेनैव कर्तृत्वविवक्षा न परस्परवाच्यत्वाऽवच्छेदेनेति न पञ्चम्यनुपपत्तिरिति ॥ उक्ताऽपादनत्वस्य पञ्चमीवाच्यतावच्छेदकत्वे गौरवं मनस्याधायाऽऽह । वस्तुतइति । लक्षणमात्रमिति । मात्रपदेन शक्यताऽवच्छेदकत्वव्यवच्छेदः । तथा च व्युत्पत्त्यादिफलकं निरुक्ताऽवधित्वमेव पञ्चम्यर्थस्तु विभागाऽऽश्रयमात्रमेवेति भावः । द्वितीयार्थोक्तरीत्येति । चैत्रो ग्रामं गच्छतीतिवच्चैत्रः स्वं गच्छतीति वारणाय परया कर्तृसंज्ञया बाधादित्युक्तरीतेरित्यर्थः । नन्वेवं वृक्षात्पर्णं पततीतत्र पर्णेऽपि विभागाश्रयत्वस्याविकल्पात्तदुत्तरं पञ्चम्यापत्तिरत आह । अतिप्रसङ्गस्येति । स्यन्दस्य प्रस्रवणजन्यविभागाऽऽश्रयत्वस्य वृक्षे सत्त्वादतिप्रसङ्गमाशङ्क्य निषेधति । नचेति । एवमिति । विभागाश्रयत्वमात्रस्याऽपादानसंज्ञानियामकत्वे इत्यर्थः । स्यादिति । प्रस्रवणस्याऽधोदेशसंयोगाऽनुकूलद्रवद्रव्यक्रियारूपतया विभागस्य धात्वर्थाऽभावेन परमते आपत्त्यसम्भवादित्याशयः । इष्टत्वादिति । चलत्यर्थक्रियाजन्यविभागाश्रयत्वस्यैव तदर्थक्रियाजन्यविभागाऽऽश्रयत्वस्याऽपि पञ्चमीनियामकत्वे क्षतिविरहादित्यर्थः । चलतेर्गत्यर्थकत्वेऽपि राज्याच्चलित इति प्रयोगे विभागाऽनुकूलक्रियापरत्ववत्स्यन्देरपि तदर्थत्वमुपगम्यापत्तेरिष्टत्वमिति भावः । जलमत्र कर्तृ वृक्षस्यैव कर्तृत्वविवक्षायां तु परया कर्तृसंज्ञया बाधिनोक्ताऽऽपत्तेरसम्भवादिति भावः ॥ नचैवमपीति ॥ एव-

त्वात् । एतेन पञ्चमीजन्यापादानत्वबोधे सकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः । नचैवमपि वृक्षात्त्यजतीति दुर्व्वारम् कर्म्म संज्ञया अपादानसंज्ञाया बाधेन पञ्चम्यसम्भवात् । भ्रमात् कृते तथा प्रयोगे यदि बोधाभावोऽनुभवसिद्ध स्तर्हि पञ्चमीजन्यापादानत्वबोधे त्यजादिभिन्नधातु जन्यबुद्धेर्हेतुत्वं वाच्यम् । बलाहकाद्विद्योतत इत्यादौ निःसृत्येत्यध्याहार्य्यम् । रूपं रसात्पृथगित्यत्र तु बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम् । पृथग्विनेति पञ्चमी वा । इदञ्च

मपि धात्वर्थविभागाऽऽश्रयत्वस्याऽपादानसंज्ञानियामकत्वेऽपीत्यर्थः । दुर्वारमिति । धात्वर्थक्रियाजन्यविभागाऽऽश्रयत्वादिति भावः । कर्मसंज्ञयेति । वृक्षस्य त्यज्यर्थव्यापारजन्यविभागाऽऽश्रयत्वादिति भावः । पूर्वमतिप्रसङ्गः कर्तृसंज्ञामादायैवोक्त इदानीं तु कर्मसंज्ञामादाय प्राप्तः स निवारित इति बोध्यम् । अनुभवसिद्ध इति । वस्तुतो विभागाऽवधित्वस्य वृक्षेऽबाधात्तज्जन्यबोधस्य प्रमात्वमिष्टमेव विभागाऽऽश्रयस्यैवाऽवधित्वोक्तेः त्यजतेः पतत्यर्थे लक्षणाग्रहदशायां वृक्षात्पर्णं त्यजतीति प्रयोगस्य प्रामाणिकत्वेन कारणतावच्छेदककोटौ त्यजादिभिन्नत्वस्य धात्वंशे निवेशयितु मशक्यत्वादितरभिप्रेत्योक्तम् । यदीति । निःसृत्येति । निःसरणपूर्वके विद्योतने धातोर्वृत्तिमुपगम्य पञ्चम्युपपाद्येत्यर्थः । अत एवोपात्तविषयस्याऽन्तर्भावो वक्ष्यमाणः सङ्गच्छते । बुद्धिपरिकल्पितमिति बौद्धविभागाऽवधित्वमाश्रित्येत्यर्थः । तादृगपादानत्वाऽऽश्रयणे प्रमाणशैथिल्यं मत्वाऽऽ

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यत इति ॥

वाक्यपदीयात्त्रिविधम् । यत्र साक्षाद्धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयम् । यथाऽश्वात्पतति । यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम् । यथा वलाहकाद्विद्योतते । निःसरणाङ्गे विद्योतने द्युतिर्वर्त्तते । अपेक्षिता क्रिया यत्र तदन्त्यम् । यथा कुतोभवान् ? पाटलिपुत्रात् । अत्रागमनमर्थमध्याहृत्यान्वयः कार्य्यः ।

त्र । पृथगिति । साक्षादिति । मुख्यवृत्त्येत्यर्थः । धातुनेत्यस्य समभिव्याहृतेत्यादिः । गतिरिति । विभागजनकक्रियेत्यर्थः । उपात्तविषयमपि समभिव्याहृतधातुनोपात्तोऽलक्षितो गतिरूपो विषयो यत्रेत्यर्थः । अपेक्षितक्रियमिति । अनुपात्तधात्वर्थक्रियासाऽऽकाङ्क्षमित्यर्थः । वलाहकादिति । धूमभरुज्ज्योतिः समूहो वलाहकः ततोऽवयवभूतज्योतिषामेव विभागविवक्षणात्सोऽवधिः द्युतिश्च लक्षणया निःसरणपूर्वकविद्योतनबोधकः । तथा च वलाहकाऽवधिकनिःसरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः । अध्याहृत्येति । अर्थाध्याहाराभिप्रायेण पदाऽध्याहारवादे तु आकाङ्क्षितक्रियावाचकपदाऽनुसन्धानेऽप्यनुपात्तत्वरूपविशेषणघटितलक्षणावैकल्यं बोध्यम् । प्रामाण्यं तत्र पुष्पेभ्यः स्पृहयतीत्यादौ स्पृहयत्यादियोगे सम्प्रदानाऽऽदिसंज्ञाविधायकानि स्पृहेरीप्सितइत्यादिसूत्राणि तैस्तत्तद्धातु योग एव तद्बोधनात् । अर्थाध्याहारे तु क्रियार्थोपपदस्येत्यादिसूत्रे ल्यब्लोपइत्यादिवार्त्तिकानि च । अन्येत्विदमित्थं व्याचक्षते । यत्र

उद्देश्यश्चतुर्थ्यर्थः तथाहि सम्प्रदानेचतुर्थी तच्च कर्मणायमभिप्रैति स सम्प्रदानमिति सूत्रात्कर्मणाकरणभूतेनयमभिप्रैति ईप्सतितत्कारकं सम्प्रदानमित्यर्थकादुद्देश्यम्।

विभागस्तज्जनकक्रिया चोभयम् धातुना ऽभिधीयते तदाऽद्यम्। यत्र विभागो ऽध्याहृतधातुना तथा तद्द्वितीयम् तत्र तूभयमप्यध्याहृतधात्वभिधेयम् तत्तृतीयमिति। अधिकमन्यतोऽवधार्य्यम्॥ चतुर्थ्यर्थं निरूपयति। उद्देश्यइति। ननूद्देश्यत्वं कामनाविषयत्वं तच्च विप्राय गां ददातीत्यत्र क्रियाजन्यफलभागितया कामनाविषये गवादावतिप्रसक्तमतस्तद्ग्राहकम्। तस्य प्रामाण्येन दर्शयति। तच्चकर्मणेत्यादि। कर्मणेत्यनन्तरम् सम्बन्धमिति शेषः कर्म चाऽत्र पारिभाषिकं क्रियया यमभिप्रैतीति क्रिया व्याप्यमानस्य सम्प्रदानसंज्ञाविधानात्। अत एव तदकर्मकविषयम्। ननु ग्रामं गच्छतीत्यत्र ग्रामरूपकर्मजन्यसुखाऽऽदिफलभागितद्देश्ये कर्त्तरि अतिप्रसङ्गोऽत आह। करणभूतेनेति। करणत्वं च सम्बन्धक्रियाऽपेक्षम्। क्रियाव्यवहितव्यापारवत एव करणतया व्यापारे कर्मवृत्तित्वलाभेन तद्वृत्तित्वस्य धात्वर्थतावच्छेदकफल एव सम्भवात् कर्मवृत्तितज्जन्यत्वस्य प्रेम जन्यसुखेऽसत्त्वान्नोक्ताऽतिप्रसङ्ग इति भावः। यमित्यस्यानुपादाने योऽभिप्रैतीत्यर्थस्याऽपि लाभात्प्रथमान्तकर्त्तरि अतिप्रसङ्गः स्यादतस्तदुपात्तम् यद्यपि गौर्ब्राह्मणस्य भवत्वितीच्छाविशेष्यतया गामेवाऽवगाहते तथा सूत्रफलितार्थपरत्वान्न दोषः तथा च कर्मजन्यतद्वृत्तिफलभागित्वप्रकारको यद्विशेष्यकोऽभिप्रायः स सम्प्रदानमिति सूत्रोऽर्थः तादृशफलसम्बन्धिकप्रकारतानिरूपितविशेष्यताऽऽश्रय इति यावत्। विप्राय गान्ददातीत्यादौ परस्वत्वजनकस्वस्वत्वध्वंसाऽवच्छिन्नेच्छात्मकस्यागो दाधात्वर्थः

उद्देश्यत्वं चतुर्थ्यर्थः गोरूपकर्मणश्चाऽऽश्रयत्वेन स्वत्वरूपफले। तथा च गोवृत्तिस्वत्वजनकस्वस्वत्वध्वंसाऽनुकूलोविप्राऽभिन्नोद्देश्यकस्त्याग इति वैयाकरणमते बोधः।उद्देश्यत्वं च विप्रे गोजन्यस्वत्वभागितयेच्छाविषयत्वमेव। एवं वृक्षायोदकमासिञ्चतीतात्राऽप्युदकनिष्ठक्रियाजन्यसंयोगफलभागितयेच्छाविषयत्वात्सम्प्रदानत्वसूपपन्नम्। नैयायिकस्तु परस्वत्वेच्छाधीनस्वस्वत्वध्वंसेच्छात्याग इति मते स्वस्वध्वंसाऽवच्छिन्नत्यागो ददात्यर्थः। विशेष्यत्वं चतुर्थ्यर्थः तस्य स्वनिरूपकानिरुक्तेच्छाजन्यत्वसम्बन्धेन ददात्यर्थत्यागे गोरूपकर्मणस्त्वाधेयतया स्वत्वध्वंसरूपफले। तथा च गोवृत्तिस्वत्वध्वंसजनकोनिरुक्तसम्बन्धेन विप्रनिष्ठविशेष्यताविशिष्टोयस्त्यागस्तदाश्रयश्चैत्र इति वाक्याद्बोधः। यदि तु गौर्विप्रस्य भवतु न ममेतीच्छैव त्यागो दाधात्वर्थः एवं च उक्तस्थले निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः तस्य च स्वस्वत्वध्वंसेऽन्वयात् विप्रनिरूपितत्वेन इच्छाविषयगोवृत्तिस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्त्यवच्छिन्नत्यागाऽऽश्रय इति बोधः जन्यस्वत्वस्य गोवृत्तित्वेऽवगतेऽर्थात्तस्मिंस्तज्जन्यत्वं लभ्यत एवेति गोजन्यस्वत्वनिरूपकत्वेनेच्छाविषयत्वरूपमुद्देश्यत्वं विप्रस्याऽऽगतम् वृक्षायोदकमासिञ्चतीत्यत्र तु संयोगाऽवच्छिन्नद्रवद्रव्यक्रियाऽवच्छिन्नव्यापारो धात्वर्थवृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः स च धात्वर्थताऽवच्छेदकसंयोगाऽन्वयी द्वितीयार्थवृत्तित्वं तु द्रवद्रव्यक्रियान्वयि। तथा च वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगस्तदवच्छिन्नायोदकवृत्तिद्रवद्रव्यक्रिया तदवच्छिन्नव्यापारानुकूलकृतिमानिति बोधः। न चैवं सिचधात्वर्थताऽवच्छेदकद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकोभूतसंयोग एव वृक्षवृत्तित्वाऽन्वयान्नाऽनुपपत्तिरितिवाच्यः। अपरे तु विजातीयत्यागजन्यफलभागितयोद्देश्यत्वं सम्प्रदानत्वं चतुर्थ्यर्थः॥ एवं च विप्राय गां ददातीत्यागो त्यागजन्यफलभागित्वप्रकारकब्राह्मणवृत्युद्देश्यताकगोविषयकत्यागाऽऽश्रय इति बोधः। रुद्राय गां ददातीत्यत्र रुद्रस्य त्यागजन्यफलभागितयोद्देश्यत्वमस्त्येव

यम् । न च व्यक्त्यादिशब्दोक्तलिङ्गस्येव पश्वादिशब्दोक्तस्याऽपि साधारण्यं शक्यं वयक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा सम्भवेऽपि पशुशब्दस्य नित्य पुल्लिङ्गत्वे प्रामाण्याभावात् पश्वाऽनया पुङ्गुहाचरन्तं पश्वे नभ्यो यथा गवे इत्यादिवेददर्शनाच्च ॥

मीमांसायां चतुर्थे पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वान्नाऽनेकपशुभिः पशुस्त्रिया वा याग इति प्रतिपादितत्वाच्च । वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुंस्त्वस्य व्याकरणेन निर्णीतत्वा-

वचनेऽसम्भवेन तदन्तपशुशब्दप्रयोगात्तदर्थस्य पुंस्त्वाऽवगतेरिति भावः । ननु व्यक्त्यादिशब्दानामर्थनिष्ठलिङ्गाऽनादरेण प्रकृतिवत्पशुशब्दस्य तथा प्रवृत्तौ बाधकाऽभावादुक्तदोषोदुरपह्नव इत्याशङ्क्य निराचष्टे । नचेति । व्यक्त्यादीत्यादिना वस्त्वादिपदसङ्ग्रहः साधारण्यं स्वाश्रयवाच्यत्वसम्बन्धेन स्त्रीपुंसवृत्तित्वं नित्यस्त्रीलिङ्गत्वेनेति स्त्रियां क्तिन्नित्यनुशासनादिति भावः । ननु पशुनायजेतेति वैदिकप्रयोग एव तस्य नित्यपुंस्त्वे मानं स्यादत आह । पश्वेति । तथा च वेदे पशुशब्दस्य स्त्रीलिङ्गत्वस्याऽपि दर्शनेन न तस्य व्यक्त्याऽऽदिशब्दसाम्यमिति भावः ॥ स्वोक्तेऽर्थे मीमांसकसम्मतिमाह । मीमांसायामिति । वक्ष्यमाणाऽस्वरसादाह । वस्तुतस्त्विति । ननूप्रत्ययान्तानां नित्यपुंस्त्वे पश्वेत्यादिस्त्रिलिङ्गप्रयोगाऽनुपपत्तिरत आह । वेदभाष्येपीति । तथा च व्यक्त्यादिशब्दोक्तलिङ्गस्येव पशुशब्दोक्तलिङ्गस्याऽपि स्त्रीपुंससाधारण्यान्न तस्याऽर्थपरिच्छेदकत्वमिति भावः ।

ट्वेदभाष्येऽपि जसादिषु छन्दसि वा वचनमिति नाभावाऽभाव इत्युक्तेः पशुशब्दस्य नित्यपुंस्त्वनिर्णयात्। प्रकृते छागो वा मन्त्रवर्णादिति न्यायेनैव निर्णयः। मन्त्रवर्णे हि छागस्य वपाया मेदस इति श्रूयते। तत्र छागस्येति छाग्याऽसम्भावितमिति भवति ततः पुंस्त्वनिर्णय इति विस्तरेण प्रपञ्चितम्भूषणे (चतुष्कम्) सङ्ख्यासहितं त्रिकमित्यर्थः। (पञ्चकम्) कारकसहितं चतुष्कमित्यर्थः।

ननु कथं तर्हि पुम्पशोरेव यागाऽङ्गत्वनिर्णयोऽत आह। छागोवेति। न्यायेनैवेत्येवकारेण लिङ्गस्याऽर्थपरिच्छेदकस्य व्युदासः यथा साख्तौ मेषावितग्रच तद्धितप्रकृतिशब्दः स्त्रीलिङ्गः पुल्लिङ्गो वेति सन्देहे सन्दिग्धे वाक्यशेषादितिन्यायेन तद्दामदव्यमिथुनमित्यर्थवादाद्द्वयोरेवैकशेषेण ग्रहणं तद्वन्मन्त्रवर्णाच्च पुम्पशोर्यागाङ्गत्वनिर्णय इति भावः। तत्रेति। मन्त्रवर्णे इत्यर्थः। असम्भावितमिति। छागशब्दस्य वास्त्यादिवन्नित्य-लिङ्गत्वाऽभावादिति भावः। प्रपञ्चितमिति। लौकिकलिङ्गमेव नामाऽर्थः तच्चाऽवयवविशेषसंस्थानरूपम् दारानित्यादौ पुंस्त्वाऽऽरोपेणैव तदयुक्तकार्यं शास्त्राङ्गाद्धाः पुंसीत्यादिलिङ्गाऽनुशासनस्यैवोक्ताऽर्थे मानत्वादत एव न पशुस्त्रिया यागमिति अथवा स्त्रीत्वादिजातिरेवेतिको जातय एवैताः केषाञ्चित्समवस्थिताः अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिरित्यादि तत्रोक्तमिति। परेतु स्तनकेशवती नारी लोमशः पुरुषः स्मृतः। एतयोरन्तरं यच्च तदभावे नपुंसकमिति स्मृत्युक्तलक्षणलक्षितलिङ्ग-

स्याऽसार्वत्रिकत्वेन दारानित्यादौ नत्वाऽनापत्त्या स्त्रियामितिसूत्रेऽवश्यं कश्चित्स्वकृतान्त आश्रेय इत्यादिना सार्वत्रिकगुणाऽवस्थारूपपारिभाषिकलिङ्गस्य शास्त्रीयकार्योपयोगिनो भाष्यकृताऽभ्युपगमेऽपि गुरुसंज्ञाविज्ञानानत्वाऽऽदिशास्त्रप्रवृत्तौ लौकिकलिङ्गस्याऽप्याऽऽश्रयणं पुमादिसंज्ञानां सङ्ख्यासंज्ञाया इवाऽधिकसङ्ग्रहार्थं प्रवृत्तत्वेपि मतसिद्धाऽर्थनिरासाऽर्थमप्रवृत्तेः। अत एवाऽविर्भावस्तिरोभावस्थितिश्चेत्यप्यपायिनः। धर्मी मूर्त्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिता। इत्यत्राऽपि नाऽलौकिकलिङ्गमपिना समुच्चितवान् हरिः। तत्र सति सम्भवे सामानाधिकरण्यसम्बन्धेन लौकिकपुंस्त्वविशिष्टशास्त्रीयलिङ्ग एव पुमादिशब्दानां शक्तिर्न केवलशास्त्रीयेनाऽपि लौकिकेऽसम्भवे तु शास्त्रीय एव। अत एव पशुना यजेतेत्यादौ पशुस्त्रिया कृते यागे वैगुण्यं तत्र लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनादित्याहुः। अथ लिङ्गे शक्तिग्रहविषयताया अभावेन प्रातिपदिकाऽर्थत्वाऽभावात्त्रिकमिति पक्षोऽनुपपन्न इति चेन्न। स्वमोर्नपुंसकादित्यादिसूत्रप्रामाण्येन पुल्लिङ्गादिविशिष्टोऽयं घटो घटपदवाच्य इत्याकारकशक्तिग्रहाऽभ्युपगमेन सामञ्जस्यात्। शब्दनिष्ठमेव लिङ्गं नत्वादिप्रवृत्तौ निमित्तमिति मते शब्दाऽर्थयोरभेदे लिङ्गस्य साक्षादितरथा स्वाऽऽश्रयवाच्यत्वसम्बन्धेनाऽर्थांशे प्रकारत्वाद्धर्मिताऽवच्छेदकत्वेन धर्मिताऽवच्छेदकसमानाधिकरणत्वेन शक्तिग्रहविषयताया नियामकत्वस्य फलबलेन कल्पनात्। वस्तुतस्तु पारिभाषिकलिङ्गमप्यर्थं एव स्वीकर्त्तुमुचितम्। पुल्लिङ्गशब्द इत्यादौ पुल्लिङ्गाऽऽदिशब्दा अर्शआद्यजन्ताः आत्मनि सर्वस्याऽध्यस्तत्वेन परया तथाऽपि स्त्यानादिसत्त्वादात्मा ब्रह्मेत्यादिप्रयोगोपपत्तिः स्त्यानं तिरोभावोऽपचय इति यावत् उपचयाऽऽदिविवक्षाया एव प्रयोगनियामकत्वेन तेषामेकत्र विरोधेऽपि व्यत्यभावादत एव सामान्ये नपुंसकमिति तत्र तत्रोक्तं सङ्गच्छते। उत्कर्षापकर्षसत्त्वेऽपि तदविवक्षायामिति तदर्थं इत्याद्यन्यतोऽवधार्यम्॥ लिङ्गाऽऽदि-

नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यं तत एव लिङ्गाद्यादीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्सत्यं प्रत्ययवर्ज्जिते दधिपश्येत्यादौ प्रत्ययमजानतोऽपि बोधात्प्रकृतेरेव वाचकत्वं कल्प्यते । लिङ्गानुशासनस्य प्रकृतेरेव दर्शनाच्चेति । अत एवैषु पक्षेषु न निर्बन्धः प्रत्ययस्यैव वाचकताया युक्तत्वात् ।

त्ययस्य नामार्थत्वं साधयितुं शङ्कते । नन्विति ।अन्वयव्यतिरेकाभ्यामिति। टाबादिसमभिव्याहारेऽजादिपदात्स्त्रीत्वबोधात्तदभावे च तदबोधादेवंरूपाभ्यामित्यर्थः। एवमन्यत्राऽप्यूह्यम् । तथा च ताभ्यां लिङ्गादेः प्रत्ययार्थत्वाऽवधारणान्न लिङ्गादित्रिकस्य प्रकृत्यर्थत्वमित्यर्थः । दधि पश्यतीत्यादावित्यादिनाऽयं यात्ययमायातीत्यादिपरिग्रहः । बोधादिति । कर्मत्वाऽऽदिबोधादित्यर्थः । तथा च व्यतिरेकव्यभिचारेणान्यलभ्यत्वाच्च तदर्थत्वाऽभावान्नामाऽर्थत्वमेव तेषामावश्यकमिति भावः । वक्ष्यमाणयुक्त्या सङ्ख्याकारकयोः प्रत्ययार्थत्वेऽपि लिङ्गस्य प्रकृत्यर्थत्वमेव युक्तमित्याशयेनाऽऽह । लिङ्गेति । अतएवेति । प्रकृतिप्रत्यययोरन्यतरस्य वाचकत्वे युक्तिसाम्यादेवेत्यर्थः । निर्बन्धइति । इदमेव मतं मुख्यमित्यभिनिवेश इत्यर्थः । तदेवाऽऽह । प्रत्ययस्यैवेति । युक्तत्वादिति । अनन्तानां शक्तत्वकल्पनाऽऽपेक्षया कतिपयस्वादीनामेव तत्कल्पने लाघवादिति भावः । केचित्तु टाबादिकं विनाऽपि वागादिशब्देभ्यः स्त्रीत्वस्याऽव्युत्पत्तिपक्षे रामज्ञानाऽऽदिशब्देभ्यः पुन्नपुंसकत्वयोर्बोधस्य सार्वजनीनाऽनुभवसिद्धत्वाल्लिङ्गत्वं प्रातिपदिकाऽर्थमेव लुप्तविभक्तिस्मरणादपि बोधाऽङ्गीकारेण

सङ्ख्याकारकयोर्विभक्तिवाच्यतैव। उक्तं च। स्वार्थो द्रव्यं च लिङ्गं च सङ्ख्याकर्मादिरेव च। अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः। इति। अग्रिमा लिङ्गान्ता इत्याहुः। नन्वेकवचनत्वादेरनुगतस्य दुर्वचतया कथं तेन रूपेण स्वादीनामेकत्वाऽऽदिवाचकत्वम्। तथाहि न तावदेकत्वाऽऽदिवाचकत्वं तत् वाचकतायाः शक्तताऽरूपत्वेनाऽऽत्माऽऽश्रयात् बोधकतारूपत्वे तु द्विवचनाऽऽदीनामपि शक्तिभ्रमेणैकत्वाऽऽदिबोधकतयाऽतिप्रसङ्गात् बोधकत्वं शक्तिरिति मते आत्माऽऽश्रयस्य दुर्वारत्वाच्च नाप्येकवचनत्वाऽदिकं जातिः सुत्वाऽऽदिना साङ्कर्यात्। न च पाणिनिसङ्केतसम्बन्धेनैकवचनाऽऽदिपदवत्त्वं तत् तादृशसङ्केतस्य सङ्केतत्वेन सम्बन्धत्वे क्वचिदेकवचनाऽऽदिपदादौ जसादिर्बोद्धव्य इत्याकारकसङ्केतस्याऽपि सम्भवेनाऽतिप्रसङ्गतादवस्थ्यात् पाणिनिसङ्केतत्वेन तत्त्वे तु व्याकरणाऽन्तरप्रणेतृपुरुषाऽन्तरस्याऽपि पाणिनिसङ्केततुल्यसङ्केतसम्बन्धेनैकवचनाऽऽदिपदवत्त्वस्य डित्थाऽऽदिपदात्स्वौजसादिर्बोद्धव्य इत्याकारकपुरुषविशेषीयसङ्केतसम्बन्धेन डित्थाऽऽदिपदवत्त्वस्य वा विनिगमनाविरहेण शक्ताऽवच्छेदकत्वाऽऽपत्तेरिति चेन्न। सुत्वाऽऽम्त्वाऽऽदिनैवैकवचनस्य शक्यत्वाभ्युपगमे नोक्तदोषाऽनवकाशात्। कार्यताऽवच्छेदककोटावव्यवहितोत्तरत्वनिवेशाच्च न परस्परजन्योपस्थितौ व्यभिचारः। न च दधिमध्वित्यादौ व्यभिचारः। तत्र लुप्तविभक्त्यनुसन्धानेनैव बोधाभ्युपगमात् कथमन्यथा द्योतकतावादिमतेऽपि केवलप्रातिपदिकात्तदुपपत्तिर्द्योतकस्यैवाऽभावात्। न चाऽनेकसुत्वादीनां शक्तत्वाऽवच्छेदकत्वे गौरवात्प्रातिपदिकत्वस्यैकस्य तत्त्वमुचितं लाघवादिति शब्दसुत्तरीत्या प्रातिपदिकत्वस्याऽप्यनुगतस्य दुर्वचत्वात्। तदज्ञानेऽप्येकत्वाऽऽदिबोधस्याऽनुभवसिद्धत्वात्। पदेन वर्णत्वेन वा शक्तत्वे तु विभक्तेरपि वाचकतासिद्धेः। एकत्वाऽऽद्युपस्थितेः प्राग्वर्णत्वाऽऽद्युपस्थितेरप्यनावश्यकत्वात्तदनुरोधेन तत्कल्पने गौरवाच्च पदार्थयोर्विशेष्यविशेषणभावेनाऽन्वये भिन्नपदजन्योप-

स्थितिस्तत्र तयैकप्रकृत्युपस्थाप्यघटैकत्वाद्योस्तदभावेन परस्परमनन्वयाऽऽपत्तिश्चेति स्वादीनां सङ्ख्याऽऽदिवाचकत्वमेवेति भावः। द्योतकतावादिनां पुनरयमाशयः न प्रकृतीनां घटैकत्वाद्योर्विशकलितयोः शक्तिर्येनोक्तदूषणाऽवकाशः स्यात् किंत्वेकत्वविशिष्टे घटादौ पृथक् शक्त्यनभ्युपगमेनाऽन्वयस्यैवाऽभावात् अनन्तप्रकृतीनामेकत्वाऽऽदिशक्तताकल्पनगौरवस्याऽप्यभावाच्च घटपदस्यैकत्वे शक्तिभ्रमदशायां घटः प्रमेय इत्यादिवाक्यादेकत्वं प्रमेयमिति बोधस्य सर्वसिद्धतया तदनुरोधेनैकत्वाऽऽदिविषयकशाब्दबोधे घटाऽऽदिपदजन्यैकत्वाऽऽद्युपस्थितेर्हेतुताया आवश्यकत्वाच्च। किं च विभक्तेः सङ्ख्यावाचकत्वमते समानविषयकाऽनुमितिसामग्रीप्रतिबन्धकतायां प्रातिपदिकजन्यघटाऽऽद्युपस्थितिः स्वादिजन्यैकत्वाद्युपस्थितिश्च निवेश्या। तथा च तयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबन्धकभावबाहुल्यम्। मन्मते तदुभयस्थलीयैकैकविशिष्टविषयकोपस्थितिस्तत्र निवेश्येति लाघवम् विशिष्टविषयकोपस्थितेरप्येकत्वादिप्रकारतानिरूपितघटाऽऽदिविशेष्यताशालित्वेन घटाऽऽदिविशेष्यतानिरूपितैकत्वाऽऽदिप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमकाऽभावात्साम्यमिति तु न मन्मते यत्र योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कम् तत्र मन्मते योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं विशिष्टोभयरूपेण वैशिष्ट्यं निवेश्यद्वयम् प्रत्येकं तादृशरूपाऽवच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्ट्यं निवेश्य च द्वयमिति चतुष्टयमिति लाघवात् अतिप्रसङ्गपरिहारस्तु तत्तत्सङ्ख्याबोधे तत्तद्वचनसमभिव्याहारस्य हेतुत्वकल्पनादेवं कारकं विभक्त्यर्थ इति कल्पे तत्तत्कारकबोधे स्वोत्तरतत्तद्विभक्तिसमभिव्याहारस्य हेतुत्वकल्पनात् स बोध्यः स चाम्घट इत्यतो बोधवारणाय वाचकतावादिनाप्यावश्यकः एवं रीत्योपसर्गाणामपि द्योतकत्वं बोध्य-

मिति पक्षद्वयेऽपि हरिसम्मतिमाह । द्योतिकावाचिकावेति। यद्वा सङ्ख्या वतोऽर्थस्य समुदायोऽभिधायक इतिव्याख्योत्तरार्द्धं घट इत्याद्याकारकानुपूर्व्यवच्छिन्नविभक्त्यन्तसमुदायो वैकत्वाऽऽदिविशिष्टघटाऽऽदिवाचक इति तदर्थः पदस्फोटमवलम्ब्य चेदं नामाऽर्थधात्वर्थयोः साक्षादभेदाऽतिरिक्तसम्बन्धे नाऽन्वयस्याऽव्युत्पन्नत्वादभिधानाऽनभिधानव्यवस्थाऽनुपपत्तेश्च कारकविभक्त्यर्थः यदि च नामाऽर्थधात्वर्थयोर्भेदेन परस्परान्वयाऽऽपादनं तण्डुलकर्मकपाकविशेष्यकबोधे द्वितीयां तण्डुलपदसमभिव्याहृतपचतीत्यादावानुपूर्वीविशेषज्ञानस्य हेतुत्वकल्पनयैव निरसितुं शक्यम अनभिहिताऽधिकारस्याऽपि सङ्ख्या विभक्त्यर्थ इति पक्ष एवोपयोगस्तत्पक्षे कर्मणि द्वितीया द्व्येकयोरित्यादीनामेकवाक्यतयैव प्रवृत्तेस्तत्र विशेष्यविशेषणभावे कामचारात् एकस्य यत्कर्म कर्मण्येकत्वमिति द्विधा शाब्दार्थसम्पत्तिः । प्रथमकल्पे द्वितीयादीनां तिङादीनां च कर्माऽऽदिवाचकतयाऽन्यतरेणाऽभिधानेऽन्यतरस्य गतार्थत्वादनभिहितसूत्रमफलं । द्वितीये तु कृता कर्मणोऽभिधानेऽपि तद्गतसङ्ख्याया अनभिधानात्तां द्वितीयां वारयितुं तदवसरः सति तस्मिन्ननभिहितकर्मगतत्वाऽभावान्न द्वितीयाऽऽदिप्रसङ्गः सङ्ख्यापि यदि प्रातिपदिकाऽर्थस्तदोक्तवाक्याऽर्थोऽसम्भवात्सूत्रवैयर्थ्यमेव । नन्वनभिहितसूत्राऽभावे भीष्मं कटं करोतीत्यादौ भीष्मादिपदाद्द्वितीयाद्यनुपपत्तिः विशिष्टस्यैव कटादेः क्रिययेप्सिततमत्वात्प्रातिपदिकार्थमात्रे प्रथमाप्रसङ्गात् तत्सूत्रपक्षे त्वभिधानस्य कृदादिभिः परिगणनात्कटप्रकृतिद्वितीययाऽभिहितेऽपि तस्मिन् भीष्मादिपदेभ्यो द्वितीयाऽऽदिविभक्तेः सूपपादत्वादिति चेन्न । विशिष्टस्य विधित्सायां धर्मिमात्रेण तोषाऽभावाद्धर्माणामपीप्सिततमत्वात्कर्मत्वम् तस्य चाऽन्यवाचकपदोत्तरद्वितीययानभिधानात् । कृतः कट इत्यादौ तु प्रत्ययस्य धातूत्तरवर्त्तित्वेन तेन प्रातिपदिकाऽर्थविशेषनिष्ठकर्मत्वस्याऽनभिधानाद् विशेषाद्धर्मधर्मिनिष्ठतदभिधानमिति भीष्माऽऽदिविशेषणवाचकपदेभ्यः

द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय इति वाक्यपदीयेऽपि पक्षद्वयस्य व्युत्पादनात् । शास्त्रे इति बहुषु स्थलेषु व्युत्पादनं व्यञ्जयितुम् । प्राधान्येन तु सरूपसूत्रादौ व्यक्तम् ॥ २५ ॥

शब्दस्तावच्छाब्दबोधे भासते ।
न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते ।

प्रथमोपपत्तिरिति न काऽपि तदनारम्भेऽनुपपत्तिस्तदुक्तं भाष्ये कटोऽपि कर्म भीष्मादयोपीति तदाऽस्तु कारकमपि प्रातिपदिकाऽर्थः अस्मिन्नपि पक्षे कारकस्य प्रकृतयर्थव्यक्तिविशेषणतैव विभक्तिद्योत्यत्वादिति केचित् । नैवं प्रातिपदिकाऽर्थप्रकारकबोधे सुबन्त्योपस्थितेर्हेतुत्वं विलीयेतेतिवाच्यम् । इष्टत्वात् । एतत्कल्पे जातिलिङ्गसङ्ख्याकारकविशिष्टद्रव्यस्य प्रातिपदिकाद्बोधेनोक्तहेतुहेतुमद्भावस्य गगनकुसुमायमानत्वाद् विशेष्यतैव तु कारकस्योचिताऽनुभवात् क्रियाऽन्वयाऽनुरोधाच्चे ति पञ्चकपक्षस्योपपत्तिरित्ति ॥ बहुषुस्थलेष्विति । भाष्याऽऽद्याकरग्रन्थे ष्वित्यर्थः । तत्र पञ्चकचतुष्कपक्षौ तत्रोपपदमित्यत्र कैयटेनोपन्यस्तौ त्रिकमितिपक्षस्तु हरिकारेण । प्राधान्येनेति । तत्र सर्वेषामेव पक्षाणां भाष्यकृतोपन्यासादिति भावः । सूत्रादावित्यादिनाऽनभिहिताऽऽदिसूत्रसङ्ग्रहः ॥ २५ ॥ घटमानयेत्यादिशाब्दबोधे घटाऽऽदिशब्दस्य भाने प्रामाणाऽभावेन तस्य प्रातिपदिकाऽर्थत्वसाधनमनुचितमितयाशङ्कां परिहरति । शब्दस्तावदिति । तत्र हरिवाक्यम् प्रमाणयति । नसोस्तीति । प्रत्ययः शाब्दबोधाऽऽत्मकः । शब्दाऽनुगमादिति । शब्दविषयकत्वादित्यर्थः । अनुविद्धमिति । विशिष्टमित्यर्थः अनुव्यवसायो यथार्थेन विशिष्टज्ञानं विषयीकरोति तथा शब्देन विशिष्टमपीत्यर्थः । वैशिष्ट्यं चाऽर्थद्वारकं बोध्यम् घटपदजन्यबोधाऽनन्तरं

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ।

इत्याद्यभियुक्तोक्तेः। विष्णु मुच्चारयेत्यादावर्थोच्चारणाऽसम्भवेन विनाशब्दविषयं शाब्दबोधाऽसङ्गतिश्चेति सोऽपि प्रातिपदिकार्थः।न च लक्षणया निर्वाहः।निरूढलक्षणायाः शक्त्यनतिरेकात् जवगडदशमुच्चारयेत्यादौ शक्याऽग्रहेण शक्यसम्बन्धरूपलक्षणाया अग्रहा

घटं शाब्दयामीत्येवाऽनुव्यवसायाच्च कलशं कुम्भं वेत्यत एवोदेति सविता भानुरित्यादौ न पौनरुक्त्यम् तत्पदाऽनुपादाने उदयाऽस्तयोः शाब्दबोधे एकरूप्याऽनिर्वाहादिति भावः । ननु तावताऽपि शब्दभानं सिद्धं न विशेष्यत्वेनेति कथं शब्दस्य शब्दाऽर्थत्वसिद्धिरत आह । विष्णुमिति । अर्थोच्चारणाऽसम्भवेनेति वदता लक्षणाऽवसरोऽपि सूचितः । असङ्गतिरिति । अनुपपत्तिरित्यर्थः सोऽपि । शब्दोऽपि । प्रातिपदिकार्थइति । प्रकाराऽन्तरेणोपस्थितस्य विशेष्यत्वाऽसम्भवादिति भावः ॥ लक्षणया । स्ववाच्यवाचकत्वसम्बन्धरूपया । निर्वाह इति । तावताऽपि पदवाच्यत्वाऽसिद्धेरिति भावः । निरूढेति । निरूढत्वं च लक्षणाया अनादितात्पर्यग्रहाऽधीनत्वम् अनादित्वं च तत्र स्वजन्यबोधसमानाऽऽकारपूर्वपूर्वबोधध्वंसवत्त्वम् शक्त्यनतिरेकादित्यस्याऽऽनन्तर इत्यादि । एतत्तत्त्वमग्रे वक्ष्यते । तस्या असार्वत्रिकत्वमप्याह । जवगडदशमिति । तत्र समुदायस्य कुत्राऽप्यशक्तत्वादिति भावः । अग्रहादिति । अन्यत्र तु तादृशसमुदायस्यैव तत्पदशक्यतयाऽनुपपत्तिरिति भावः । ननु तत्र समुदायस्याऽशक्तत्वेऽपि तद्घटकजकाराऽऽदिवर्णानामेकाऽक्षरकोशाऽऽदौ जैनाऽऽदौ शक्तिप्रतिपादनात्तत्तदर्थवाचकत्वरूपलक्षणायास्तत्र नाऽनुपपत्तिरत आह । अज्ञाताया इति।गङ्गापदस्य वस्तुतः स्वशक्यप्रवाह सामीप्यरूपसम्बन्धस्याऽग्रहे लक्षा

च्च। अज्ञातायाश्च वृत्तेरनुपयोगाद्गाङ्गमुच्चारयेति भाषा शब्दानामनुकरणे साधुतासम्प्रतिपत्तेस्तेषां श क्त्यभावेन परनये लक्षणाया असम्भवाच्चेत्यभिप्रेत्य षोढाऽपि क्वचित्प्रातिपदिकाऽर्थ इत्याह।

शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ॥२६॥

यद्यनुकार्याऽनुकरणयोर्भेदविवक्षा तदा शब्दोऽर्थोऽपि

र्थबोधस्याऽनुदयेन ज्ञाताया एव तस्याः पदार्थोपस्थित्यौपयिकत्वेन प्रकृते तदग्रहादुक्ताऽनुपपत्तिस्तदवस्थैवेति भावः। ननु शाब्दबोधाऽव्यवहितप्राक्काले तादृशवृत्तिग्रहाऽसत्त्वेऽपि यदा कदाचिज्ज्ञाततादृशवृत्तिग्रहादिनोद्बुद्धसंस्कारेण पदाऽर्थोपस्थितिद्वारा तादृशशाब्दबोधोपपत्तिः सुकरेत्यत आह। गाङ्गमिति। गोशब्दाऽऽद्यनुकरणे साधुत्वस्य सर्वैरेवाऽभ्युपगमादित्यर्थः। परनयइति। परो नैयायिकस्तन्मते तेषां शक्त्यभावेन तद्घटितलक्षणाया अप्यप्रसराद्वृत्तिमत्त्वात्मकार्थवत्त्वनिबन्धनप्रातिपदिकत्वाऽऽद्यनुपपत्तिरिति भावः॥ षोढाऽपीति॥ पूर्वोक्तपञ्चकसहितः शब्दोऽपीत्यर्थः। क्वचिदनुकरणस्थले। तच्चाऽनुकरणं द्विविधम्। ध्वनेर्वर्णस्य च। तत्राऽऽद्यम्। पटत्करोतीत्यादि। द्वितीयम्। भुवोवुगित्यादि। भेदविवक्षेति। पटदित्यादौ ध्वनिमयत्ववर्णमयत्वाभ्यां भुवोवुगित्यादावर्थपदाऽर्थकत्वशब्दपदार्थकत्वाभ्यां तद्विवक्षेत्यर्थः। शब्दोऽर्थोऽपि प्रातिपदिकाऽर्थ इति। तथा च मतोष्क:सुतसाम्नोरितिसूत्रे योसावाम्नायेऽस्य वामशब्दः पठ्यते सच्छब्दप्रकृतेरस्यवामीयमित्यादौ पदार्थोऽत एव प्रातिपदिकत्वाच्छ सिद्धिरितीति भावः। मूले। अर्थेवभासतेइति पाठे अर्थे यवादिस्वरूपे

**प्रातिपदिकार्थः यदि न भेदविवक्षा तदा श्रोत्रादिभि-
रुपस्थितोऽप्यर्थवद्भासते अपिर्हेतौ उपस्थितत्वाद्भासत
इत्यर्थः। अयं भावः। अनुकार्यानुकरणयोर्भेदेऽनुकार्य-
स्य पदाऽनुपस्थितत्वात्तत्सिद्धये शक्तिरुपेया। अभेदे
प्रत्यक्षे विषयस्य हेतुत्वात्। स्वप्रत्यक्षरूपां पदजन्यो-
पस्थितिमादाय शाब्दबोधविषयतोपपत्तिरिति।**

अवभासते विशेषणतया विषयो भवतीत्यर्थः। वस्तुतस्तु भूषणपर्यालोच-
नयाऽनावर्थोऽवभासत इति पाठः। तत्र वशब्दः सादृश्ये तथा च भेदपक्षे
यथाऽनुकार्यरूपोऽर्थो विशेष्यतया शाब्दबोधे भासते तथाऽभेदपक्षेऽनुका-
र्याऽभिन्नोऽनुकरणशब्दोऽपीत्यर्थः। तत्राऽनुपस्थितस्य कथं भानमित्या-
काङ्क्षायामुक्तं श्रोत्रादिभिरिति आदिना वृत्तिज्ञानतज्जन्यसंस्कारसङ्ग्रह
इति केचित्। वस्तुतस्तु लिप्याद्यनुसंहितस्य तस्य शाब्दे भानसम्पत्तये
आदीति पदोपस्थितमेव शाब्दबोधे भासते इति तु सार्वत्रिकमिति भा-
वः। अत एव सारकृताऽर्थवद्भासते इति तद्विवृतम्। एतेनाऽभेदपक्षेऽनुक-
रणस्याऽर्थाभावेन तदंशे भानवर्णनमसम्भवदुक्तिकमित्याशङ्का समाहिता।
नन्वभेदपक्षेऽप्यनुकार्यस्य शाब्दे कथं भानम् पदवृत्तिजन्योपस्थित्यभावा
दत आह॥अयम्भावइति॥ यदाऽनुपस्थितत्वादित्यस्य शाब्दबोधे भानाऽ
नुपपत्त्येति शेषः। तत्सिद्धये। शाब्दबोधजनकपदजन्योपस्थितये इत्यर्थः।
शक्तिरिति। असम्बद्धस्य तस्य तत्रजनकत्वादिति शेषः। तथा च पदवृत्ति
ज्ञानजन्योपस्थितिसद्भावात्तस्य शाब्दविषयता सुलभेति। अभेदइति। अभे
देति विवक्षायामित्यर्थः। तत्पक्षे निरूप्यनिरूपकत्वयोर्भेदनिबन्धनत्वेना-
नुकरणे तद्वृत्त्यसम्भवादिति भावः। हेतुत्वादिति। उपस्थितिनिष्ठजन्यता
यामन्वेति। स्वप्रत्यक्षेति। अनुकरणप्रत्यक्षरूपामित्यर्थः। शाब्दबोध

यद्यप्यतिप्रसङ्गवारणाय वृत्तिजन्यपदोपस्थितिरेव हेतुः तथाप्यत्राऽऽश्रयतया वृत्तिमत्वस्य सत्त्वान्नाऽनुपपत्तिः निरूपकताऽऽश्रयताऽन्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यते इत्यनत्रदं सम्बन्धस्योभयनिरूप्यत्वात् । पदार्थस्यैव तद्बोधकत्वेन स्वस्याऽपि ज्ञानसम्भवाच्चेति ।

विषयतोपपत्तिरिति । अयमाशयः अभेदपक्षे स्वप्रतयक्षरूपामुपस्थितिमादाय यथा शाब्दे शब्दस्य भानं तथैव घटमानयेतयादौ घटाऽऽदिपदानामपि तां सामग्रीमादाय भानस्य दुर्वारतया शाब्दबोधमात्रस्य शब्दविषयकत्वसिद्धिः । तदुक्तं स्वरूपमितिसूत्रे भाष्ये नैतद्वक्तव्यं किं कारणम् शब्दपूर्वको ह्यऽर्थे सम्प्रतयः अतश्च शब्दपूर्वः योऽपि ह्यसौ नाम्नाऽऽह्वयते नाम च तेन यदा नोपलब्धं तदा पृच्छति किं भवानाहेति शब्दपूर्वकश्चाऽर्थस्य सम्प्रतयः इह शास्त्रे शब्दे सम्भवादर्थस्य निवृत्तिरिति तत्र शब्दपूर्वकोह्यीतयादिना शब्दवृत्तिज्ञानस्य पदाऽर्थो नोपस्थित्यादावन्वयव्यतिरेकौ प्रदर्श्य शब्दपूर्वक इत्यादिग्रन्थेन प्रकारान्तरं प्रदर्श्यते शब्दविशेषणक इत्यर्थः तेनाऽर्थे सम्भवेऽर्थाऽविशेषणतयोपस्थिते शब्दे कार्य्यमित्यर्थः । तथा चोक्तभाष्याच्छब्दतदर्थयोरुभयोरेव शब्दाज्ज्ञानम् यत्र च लोके शब्दे इतरपदार्थाऽन्वयबाधस्तत्राऽर्थांऽशे शब्दस्य विशेषणता यत्र त्वर्थे विष्णुमुच्चारयाथेर्ढगितयादौ तत्र शब्दांऽशेऽर्थस्य विशेषणतेति स्पष्टप्रतिपत्तेर्विषयत्वमनादृत्येति वाक्यपदीयाच्चेति ॥ अतिप्रसङ्गेति ॥ घटोऽस्तीतयतः समवायेनैकज्ञानविषयत्वाऽऽदिनैवोपस्थितस्याऽऽकाशादेः शाब्दे भानाऽऽपत्तिवारणायेतयर्थः वृत्तिज्ञानजन्येतयर्थः । पदोपस्थितिरिति । घटपदं शृणुयादौ तादृशपदोपस्थितेर्हेतुताया दर्शनात्प्रकृते च तदभावेऽनुकरणस्य

शाब्दविषयत्वं दुर्घटमिति भावः। आश्रयतयेति। इदं च बोधकत्वं शक्ति रित्यभ्युपेत्य बोध्यत्वं सेति पक्षे तु निरूपकतयेति बोध्यम् नन्वाश्रयता संसर्गेण वृत्तिमत्त्वस्यैव शाब्दबोधविषयत्वे तन्मत्वे निरूपकतासंसर्गेण वृत्तिमतः शाब्दे भानाऽनुपपत्तिरत आह। निरूपकतेति। प्रामाणिकगौरवस्याऽदोषत्वादिति भावः। अनवद्यमिति। वृत्तिनिरूपकाऽर्थबोधकत्वस्यैव प्रातिपदिकत्वे तन्मत्वान्नाऽभेदपक्षे तत्संज्ञाप्रसक्तिरिति भावः। ननु स्वप्रतियोगिकत्वविशिष्टसम्बन्धाऽऽश्रयतायाः स्वस्मिन्ननभ्युपगमेन कथमनुकरणस्य वृत्तिमत्तेत्यत आह। सम्बन्धस्येति। तद्बोधकत्वेनेति। एतच्छब्दाऽऽत्मकशाब्दबोधजनकत्वेनेत्यर्थः। तथा च हृथ्यादिवाक्यप्रामाण्यात्तत्स्वस्मिन्नपि तादृशसम्बन्धाऽऽश्रयताऽभ्युपगमान्न तस्य शाब्दे भानाऽनुपपत्तिरित्यनयैव रीत्या शब्दमात्रस्य शाब्दे भानं निर्वाह्यमिति भावः स्वीयप्रतच्छाऽऽत्मकबोधजनकत्वस्य वृत्तित्वं दुरुपपादम् शाब्दबोधजनकपदार्थोपस्थितिजनकज्ञानविषयताऽवच्छेदकसम्बन्धस्यैव तत्त्वात् न चैतादृशज्ञानेन शाब्दबोधात्प्राक् शब्दरूपपदार्थोपस्थितिर्जन्यते नाऽपबोधकत्वेपि बोधकत्ववदिति ज्ञानं तदानीमस्तीति येन साऽपि सम्भाव्येतस्यात्कथमेतदिति चेत्। अत्र वदन्ति सम्बन्धस्येत्यादिग्रन्थस्य पदवृत्त्युपस्थितेनार्थेन सम्बन्धाऽविशेषाच्छब्दोपस्थितिस्ततः शब्दाऽर्थयोरुभयोरपि शाब्दे भानं शब्दवृत्तिप्रयोज्यत्वस्योपस्थितिद्वये सत्त्वादित्यर्थपरत्वान्नोक्ताऽनुपपत्तिः तत्राऽर्थस्येवेत्यनन्तरं बोध्यत्वादिति शेषः तद्बोधकत्वेनेत्यत्र तदाऽव्यवहितप्रागुपस्थिताऽर्थपदाऽर्थपरामर्शस्यौचित्यादर्थबोधकत्वेनेत्यर्थात्। तदुक्तं यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्। पिण्ड एव हि दृष्टः सन्संज्ञां स्मारयितुं क्षमः। इति शाब्दबोधस्तु वक्ष्यमाणहृथ्यादिवाक्यप्रामाण्यात् क्षणविलम्बेनैवाऽभ्युपगन्तव्यः अनुकार्यस्याऽभेदपक्षे मानाय प्रकारान्तरमेवाऽनुसर्त्तव्यमिति। परे तु उक्तमते पदाऽर्थोपस्थितेः शाब्दबोधहेतुतायां तदवच्छेदककोटौ तत्तत्सम्बन्धाऽवच्छिन्नवृत्तिज्ञानजन्यत्वमिवेशाऽव-

उक्तं च वाक्यपदीये।

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते इति।
विषयत्वमनाहृत्य शब्दैर्नाऽर्थः प्रकाश्यते।

ष्यकत्वेन वृत्ते र्द्वेधा प्रवेशे गौरवम् अन्यतरत्वेन सम्बन्धनिवेशेत्वन्यतरत्वघटकभेदयोर्विशेष्यविशेषणभावे विनिगमनाविरहापत्तादवश्यमेव तदपेक्षाऽभेदपक्षे साहश्यसम्बन्धे नाऽनुकरणादनुकार्य्योपस्थितिस्तथोपस्थितस्याऽपि तात्पर्य्यवशाच्छाब्दभानं वृत्तिज्ञानजन्यतावच्छेदककोटौ साहश्यज्ञानाऽजन्यत्वनिवेशात्तद्धेतुतायां व्यभिचारः। अत एव गवित्ययमाहेत्यादौ न विभक्त्युत्पत्तिः वृत्त्यार्थबोधकत्वरूपाऽर्थवत्त्वाऽभावेनाऽप्रातिपदिकत्वात् स्पष्टश्चाऽयमर्थो मतौच्छः सूक्तसाम्नोरित्यत्रभाष्यकैयटयोः॥ स्वप्रतियोगिकत्वविशिष्टसम्बन्धस्य स्वस्मिन्सताम् तेजोदृष्टान्तव्याजेन दर्शयन् स्वोक्ते हरिसम्मतिमाह। उक्तञ्चेति। ग्राह्यत्वम्। बोध्यत्वम्। ग्राहकत्वम्। बोधकत्वम्। एते। ग्राह्यत्वग्राहकत्वे पृथगवस्थिते इत्यनेन तयोरसमनैयत्यं दर्शयति। दीपादिरूपतेजसोविषयसन्निधाने शक्तिद्वयं लोके प्रतच्च सिद्धं तदसमवधाने तु ग्राह्यत्वमेव यथा तथा शब्दानामर्थाऽबोधे उक्तशक्तिद्वयम् तद्बाधे तु ग्राह्यत्वमेवेति तदर्थः स्वरूपमिति सूत्रभाष्यादप्युक्ताऽर्थस्यैव लाभादिति तस्यैव पद्यान्तरमाह। विषयत्वमिति। स्वस्य विषयता न सम्पाद्य शब्दैरर्थो न बोध्यत इत्यर्थः। स्वजन्याऽर्थबोधत्वस्य स्वविषयकत्वव्याप्यत्वादिति यावत्। अयं भावः शब्दार्थयोरभेदमते तन्मूलकाऽध्यासाच्छब्दादर्थाऽऽकारवृत्तौ जायमानायां शब्देनाऽपि तस्यां स्वाऽऽकारसमर्पणमिति शाब्दबोधस्य शब्दविषयकत्वसिद्धिरिति। अत्र वदन्ति न सोऽस्ति प्रतत्ययो लोक इत्युक्तत्वात्किं बोधत्वाऽवच्छेदेन शब्दविषयकत्वं प्रतिज्ञायते उत ग्राह्यत्वमिति पद्यद्वयाच्छब्दत्वाऽवच्छेदेन तत्त्वम्

किं वा शाब्दत्वसामानाधिकरण्येन । नाद्यः घटादिप्रत्यक्षाऽव्यवहितप्राक्-स्थले घटादिपदोपस्थितेरनैयत्येन तादृशप्रत्यक्षस्य घटाऽऽदिपदविषयकत्वाऽसम्भवात् एवं घटाऽऽद्यनुमितावपि तज्ज्ञानं न सम्भवति व्यापकतया तदवच्छेदकतया वा व्याप्तिग्रहे तदभानात् तदनन्तरं घटपदं साक्षात्करोमि घटपदमनुमित्यनुव्यवसायाऽभावाच्च न द्वितीयः घटपदज्ञानजन्योपस्थितेस्तद्वाचकपदाऽभावेन तस्य शाब्दविषयत्वाऽसम्भवात् पदज्ञानस्य सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वेन हस्तिपकदर्शनजन्यहस्त्युपस्थितौ हस्तिपकस्येव तज्जन्याऽर्थोपस्थितावुद्बोधकताऽवच्छेदकपदस्य विषयत्वाऽसम्भवाच्च घटो न घट इति सार्वजनीनप्रतीत्या शब्दाऽर्थयोस्तादात्म्यमानाऽभावेन नाऽर्थाऽऽकारवृत्तेः शब्दाऽऽकारतासम्भवोऽपि घटशाब्दबोधाऽनन्तरं घटपदं शाब्दयामीति प्रतीतेः सार्वजनीनत्वे क्षणविलम्बसहिष्णुतासम्भवेदपि न च तस्यास्तथात्वमिति न किञ्चिदेतत् । अपि च भिन्ने विषयेऽनुमितिसामग्र्या बलवत्ता यत्र तादृशाऽनुमितिसामग्रीकाले केवलघटत्वविशिष्टविषयिका शाब्दधीर्जायतामितीच्छाबलाद्घटशाब्दधीस्तत्र घटांशे तज्ज्ञानं दुरुपपादमेव घटशब्दशाब्देच्छाविरहविशिष्टभिन्नविषयकाऽनुमितिसामग्र्याः प्रतिबन्धिकायाः सत्त्वात् नाऽपि तृतीयः सिद्धसाधनात् विष्णुमुच्चारयेत्यादौ विष्ण्वादिपदानां लक्षणया शाब्दविषयतायाः परैरभ्युपगमात् उक्तभाष्यादपि क्वचिच्छाब्दबोधे शब्दो विषय इत्यर्थस्यैव लाभात् सति तात्पर्ये क्वचिदन्यत्राऽपि विशेष्यांऽशे तज्ज्ञानाऽभ्युपगमे क्षतिविरहाच्च । अत एव न त्वाऽऽदीनां विशिष्य तत्तद्रूपेणाऽनुपस्थितत्वेऽपि न त्वपदवाच्यः कश्चिदासीदिति सामान्यशक्तिग्रहात्तत्पदवाच्यत्वेन तेषां बोधः प्राचीनसम्मत उपपद्यते अभेदे शब्दभानं तु परैरित्युक्तभाष्यसम्मतमतेनैव । अत एव तस्मादविकृतस्यैव बोधः हरिवचनानि तु प्रणवब्रह्मणोरभेदोपासनश्रद्धाऽतिशयबोधकानि भवन्तीति न तैर्व्यावहारिकाऽर्थस्य सिद्धिस्तस्माच्छाब्दबोधमात्रस्य शब्दविषयकत्वं न विचारसहमभि-

प्रसङ्गादनुकार्य्यानुकरणयोरभेदपक्षे साधकमाह ।

अत एव गवित्याह भू सत्तायामितीहशम् ।

न प्रातिपदिकं नापि पदं साधु तु तत्स्मृतम् ॥२७॥

गवित्ययमाह "भू" सत्तायामित्येवमादयो यतोऽनुकरणशब्दा अनुकार्य्यान्न भिद्यन्ते अतस्तेषामर्थवत्त्वाभावात् "अर्थवदधातु" रित्यादेरप्रवृत्तौ न प्रातिपदिकत्वम् नापि पदत्वम् । अथ च साधुत्वमित्युपपद्यते । अन्यथा "प्रत्ययः" "परश्च" "अपदं न प्रयुञ्जीते" ति निषेधादिलङ्घनादसाधुतापत्तिरित्यर्थः ॥ २७ ॥

इति वैयाकरणभूषणसारे नामार्थनिर्णयः ॥४॥

कमग्रे व्यक्तीभविष्यतीति ॥ २६ ॥ अन्यथेति ॥ भेदपक्षस्यैवाऽभ्युपगमे इत्यर्थः । प्रत्ययःपरश्चेति । नियमशास्त्राणां निषेधमुखेनाऽपि प्रवृत्तेः प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या न केवलेति नियममूलकस्याऽपदं न प्रयुञ्जीतेति निषेधविधेः प्रत्ययायोग्यस्य प्रत्ययं विना प्रयोगेऽतिक्रमणादसाधुतापत्तेरित्यर्थः । अस्मन्मते तु तस्य प्रत्यययोग्यत्वाऽभावान्निषेधविषयताया एवाऽभावात्तदतिक्रमणाऽप्रसक्तेः साधुत्वादेव च तस्याऽवादेशाऽऽदेरपि अन्यथा भाषाशब्देष्विव तत्प्रवृत्तिः स्यादिति भावः ॥ २७ ॥

इति श्री भूषणसारदर्पणे नामार्थनिरूपणम् ॥४॥

## ॥ अथ समासशक्तिनिर्णयः ॥

समासान्विभजते।

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा।
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः॥२८॥

(सुपां सुपा) पदद्वयमपि सुबन्तम्। राजपुरुषइ-त्यादिः। (सुपां तिङा)। पूर्व्वपदं सुबन्तमुत्तरपदं तिङ-

क्तृप्तशक्त्यैव निर्वाहान्न नामसमुदायाऽऽत्मकसमासेऽतिरिक्ता शक्तिरिति मतं दूषयिष्यन् प्रसङ्गात्समासाऽर्थंनिरूपयितुमादौ तद्विभागप्रदर्शनमित्याशयेनाऽऽह। समासानिति। समासत्वं च शक्तिसम्बन्धेन समासपदवत्त्वम् एकार्थीभावाऽऽपन्नपदसमुदायविशेषो वा एकार्थीभावे मानं च किं पुनः समर्थं नाम पृथगर्थानामेकार्थीभावः समर्थवचनं क्व पुनः पृथगर्थानि क्वैकाऽर्थानि वाक्ये पृथगर्थाऽनि राज्ञः पुरुष इति समासे पुनरर्थानि राजपुरुष इति समर्थसूत्रस्थं भाष्यम् तन्मूलिका वक्ष्यमाणा युक्तयश्च तत्रैकाऽर्थत्वमेकोपस्थितिविषयाऽर्थकत्वम् नत्वेकाऽर्थशक्तत्वम् घटाऽऽदिपदानामपि घटघटत्वतत्सम्बन्धरूपनामाऽर्थशक्तत्वेनैकाऽर्थताऽऽपत्तेः नानोपस्थितिविषयाऽर्थकत्वम् पृथगर्थकत्वम् यथा वाक्ये पृथक् पदानामाकाङ्क्षादिसहकारेण विशिष्टाऽर्थप्रतययो नैवं वृत्तौ किन्त्ववयवशक्त्या समुदायशक्तिसहकृततया जायमाना पदार्थोपस्थितिरेव विशेष्यविशेषणभावाऽऽपन्नविशिष्टाऽर्थमवगाहते संसृष्टार्थं समर्थमिति भाष्यात्

न्तम्। पर्य्यभूषत्। अनुव्यचलत्। गतिमतोदात्तवता तिङापि समास इति वार्त्तिकात्समासः। (सुपां नाम्ना) कुम्भकारइत्यादि। "उपपदमतिङ्" इति समासः। स च "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति परिभाषया भवति सुबुत्पत्तेः प्राक्। अत्रोत्तरपदे सुबुत्पत्तेः प्रागित्यर्थः। अन्यथा चर्म्म-

राजपुरुषाऽऽदिपदं राजसम्बन्धवत्पुरुषाऽऽदौ शक्तमित्याकारकः शक्तिग्रहः ततश्च प्राप्ताऽप्राप्ताऽविवेकेन विशिष्टशक्तिः षष्ठ्याद्यर्थे पर्यवस्यति। अत एव न तत्र राजाऽऽदौ सुन्दराऽऽदिपदार्थाऽन्वयः एकदेशत्वात् देवदत्तस्य गुरुकुलमित्यादौ तु गमकत्वात् स इति वक्ष्यते जहत्स्वार्थावृत्तिः पदानामाऽनर्थक्यमिति तु न सम्यक् महाबाहुरित्यादावात्वाद्यनापत्तेः भूतपूर्वगत्याश्रयणं तु सत्यां गतावनुचितम्। तदुक्तं जहत्स्वाऽर्था तु तत्रैव यत्र रूढिर्विरोधिनीति अवयवाऽर्थविरुद्धो यत्र समुदायाऽर्थस्तत्रैव सा यथा कृष्णसर्पादाविति तदर्थः। अयमेव पक्षः समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदितिवदतो मूलकृतः सम्मतः। तथा सति पङ्कजशब्दाऽऽदौ परैर्योगरूढ्यभ्युपगमेन स दृष्टान्तोपन्याससार्थक्यात् जहत्स्वार्थावृत्तिरिति पक्षस्य तत्सम्मतत्वे स्वमते तस्य पक्षतया यत्र तदनभ्युपगमेन तदुपन्यासाऽनुपपत्तेः स्पष्टत्वात्। अधिकमग्रे वक्ष्यत इति॥ गतिमतोदात्तवतेति। उपलक्षणमिदं सहसुपेति योगविभागस्याऽपि। अनुव्यचलदित्यत्राऽनीव्यचलदित्यनेन वैद्याऽचलदित्यनेनयुगपत्समासः अन्वितिसुबन्तेन व्यचलदितिसमुदायस्य समर्थत्वात् सत्यां समाससंज्ञायां प्राक्तनप्रतिषेधाद्यणादेशः समासाऽन्तोदात्तत्वं च भवति। तिङैकत्वस्योक्तत्वात् कृतव्यापारस्य सङ्ख्यायाऽयोग्यत्वाच्च न ततः सुबुत्पत्तिः समयपरिपालकौत्सर्गिकैकवचनस्य तु

क्रीतीत्यादौ नलोपानापत्तेः। (सुपां धातुना) उत्तर पदं धातुमात्रं न तिङन्तम् । कटप्रूः। आयतस्तूः। क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्चेति वार्त्तिकात्। 'तिङां तिङा' पिबतखादता पचतभृज्जतेत्यादि। "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गणसूत्रात्। 'तिङा सुबन्तं न' पूर्व्वपदं तिङन्तमुत्तरं सुबन्तम्। जहिस्तम्बः। जहि कर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधातीति मयूरव्यंसकाद्यन्तर्गणसूत्रात्। अयं षड्विधोऽपि समासः "सह सुपा" इत्यत्र योगविभागेन भाष्ये व्यु-

तथा सुबन्तस्याऽनभिधानादेवाऽप्रवृत्तिरिति भावः। अन्यथेति।सुबुत्पत्तेः प्राक्समाससंज्ञाऽभ्युपगम इत्यर्थः। नलोपेत्यस्याऽपदत्वादित्यादिः। यद्यप्युपपदमितिसूत्रे भाष्येऽनयोर्योगयोर्निवृत्तं सुप्सुपेत्युक्तम् तथाप्युपपदमिति महासंज्ञाबलादेव पूर्वपदस्य सुबुत्पत्त्यनन्तरं समास इति भावः। प्राक्सुबुत्पत्तेरित्येकदेशप्रयोजनप्रदर्शनमिषेण परिभाषायाः प्रयोजनमपि दर्शितम्।सुबुत्पत्तेः पश्चात्समासे हि स्वाऽर्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमिकत्वस्यान्तरङ्गबहिरङ्गभावमूलकस्य कुत्सित इति सूत्रभाष्यसम्मतत्वेनाऽन्तरङ्गत्वात्सुबुत्पत्तेः पूर्वं टाप्यनदन्तत्वात् क्रीतात्करणपूर्वादिति ङीषोऽनुपपत्तेरिति दिक्॥ भाष्येव्युत्पादितइति॥ तत्र हि प्रत्येकं समाससंज्ञावारणरूपं सहशब्दप्रयोजनं समुदाये वाक्यपरिसमाप्तिन्यायेन परिहृत्यैवं तर्हि सिद्धे यत्सहग्रहणं करोति तस्यैतत् प्रयोजनं योगाङ्गं यथा

त्पादितः स्पष्टः शब्दकौस्तुभादौ ॥ २८ ॥

स्वयं भाष्यादिसिद्धतद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्तविभागस्याव्याप्त्यादिभिस्तल्लक्षणस्य प्रायिकत्वं दर्शयति ।

समासस्तु चतुर्द्धेति प्रायोवादस्तथाऽपरः ।
योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ।
भौतपूर्व्यात्सोऽपि रेखागवयादिवदास्थितः ॥२९॥

विज्ञायेत सति योगाङ्गे योगविभागः करिष्यते सह सुपा समस्यते केन समर्थेनाऽनुव्यचलदनुप्राविशत् ततः सुपा च सह सुप्समस्यते अधिकारश्च लक्षणं च यस्य च समासस्याऽन्यल्लक्षणं नाऽस्ति तस्येदं लक्षणं भवतीत्युक्तम् । तत्राऽधिकारप्रयोजनं देवदत्तः पचतीत्यादौ समानाऽधिकरणेन समाससंज्ञावारणं बोध्यम् ॥ २८ ॥ भेदमिति ॥ षाड्विध्यरूपमित्यर्थः । प्राचीनेत्यादि । यद्यप्यव्ययं विभक्तीतिसूत्रे भाष्ये समुदायस्य संस्कार्यत्वेन प्राधान्यात्तस्यैव सम्पद्ध्यादयो विशेषणानीति समुदायात्सम्पद्ध्यादीनां गम्यमानत्वादत्राऽप्यव्ययीभावाऽपत्तिरित्यभिप्रायेणेहकस्मान्न भवन्ति समुद्राः सक्तव इति प्रश्ने नैष दोष इह कश्चित् समासः पूर्वपदार्थप्राधान इत्यादिसमासलक्षणान्युक्त्वा नाऽत्र पूर्वपदाऽर्थप्राधान्यं गम्यत इति समाहितं तथापि नैते समासार्था निर्दिश्यन्ते इत्यादिना पक्षान्तरोपन्यासेनोक्तलक्षणेष्वनिर्भरसूचनाददोष इति भावः।लक्षणस्येति।तत्त्वं साधारणधर्मवत्त्वम् धर्मसाधारण्यं च तदितराऽवृत्तित्वे सति सकलतद्वृत्तित्वम् यथा सास्नाशृङ्गवत्त्वं गोर्लक्षणम् तत्र शृङ्गवत्त्वगगनकृष्णरूपाऽऽदीनां लक्षणत्ववारणाय सत्यन्तवृत्तित्वशाकल्यानां निवेशः । तदुक्तं लक्षणे तान्येव पदा

चतुर्धा अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात् । अयं प्रायोवादः। भूतपूर्व्वः। इभ्भूः। आयतस्तूः। वागर्थाविवेत्याद्यसङ्ग्रहात् । तथा पूर्व्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । उभयपदार्थप्रधानोद्वन्द्वः । अन्यपदार्थ प्रधानोबहुव्रीहिरित्यादि लक्षणमपि प्रायिकम् । उन्मत्तगङ्गं। सूपप्रति। अर्द्धपिप्पली ।द्वित्राः। शशकुशपलाशमित्यादौ परस्परव्यभिचारात् । तथाहि

नि देयानि यैरव्याप्त्यतिव्याप्त्यसम्भवदोषा वार्य्यन्त इति।तत्र लक्ष्ये लक्षणाऽसत्वमव्याप्तिः।अलक्ष्ये तत्सत्वमतिव्याप्तिः॥लक्ष्यमात्राऽवृत्तित्वमसम्भवः। उदाहरणानि वक्ष्यन्ते । असाधारणधर्मवत्ताज्ञानात्तद्धर्माऽऽश्रय इतरभेदाऽनुमिति व्यवहारश्च फलम् यस्य तु धर्मस्य केवलाऽन्वयित्वं तद्धर्मज्ञानस्य तु व्यवहारमात्रं तत् । तदुक्तं व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति । प्रायोवादइति । प्रायशस्तेषामुपलभ्यमानत्वेऽपि अन्येषामपि केषांचिदुपलब्धेरितर्यर्थस्तदेव विशदयति । भूतपूर्वइत्यादि । एषां वक्ष्यमाणत्वाच्छिन्नलक्षणाक्रान्तत्वेऽपि तत्तदधिकारीयसूत्राऽननुशिष्टत्वादसङ्ग्रहो बोध्यः । समासाऽधिकारीयसूत्राऽनुष्ठितत्वाद्विभागे तदसङ्ग्रहे इष्टापत्तेरयोगात् । पूर्वपदाऽर्थत्वादि प्राधान्यं च समासघटकपदार्थप्रकारतानिरूपितसामीप्यस्य विशेष्यतया बोधाद्राजपुरुष इत्यादौ राजसम्बन्धिपुरुषोत्तरपदाऽर्थस्य पीताऽम्बर इत्यत्र पीताऽभिन्नाऽम्बरसम्बन्धिनोऽन्यपदार्थस्य धवखदिर इत्यत्र साहित्याऽऽपन्नधवखदिरयो; पूर्वोत्तरपदाऽर्थयोर्विशेष्यतया भानाद्यथायथं लक्षणसमन्वय; । व्यभिचारादिति । यद्यपि व्य-

उन्मत्तगङ्गमित्यव्ययीभावे पूर्व्वपदार्थप्राधान्याभावादव्याप्तिः अन्यपदार्थप्राधान्याद्बहुव्रीहिलक्षणातिव्याप्तिश्च। "अन्यपदार्थे च संज्ञायामिति" समासात्। सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च। "सुप् प्रतिना मात्रार्थे" इति समासात्। अर्द्धपिप्पलीति तत्पुरुषे पूर्व्वपदार्थप्राधान्यसत्त्वादव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च। "अर्द्धं नपुंसकमिति" समासात्। एवं पूर्व्वकाय इत्यादौ द्रष्टव्यम्। द्वित्रा इति बहुव्रीहावुभयपदार्थप्राधान्याद्द्वन्द्वातिव्याप्तिः बहुव्रीह्यव्याप्तिश्च। शशकुशपलाशमित्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्याद्बहुव्रीह्यतिव्याप्तिर्द्वन्द्वाव्याप्तिश्च स्यादिति भावः। सिद्धान्ते त्वव्ययीभावाधिकारपठितत्वमव्ययीभावत्वमित्यादि द्रष्ट-

भिचारोऽतिव्याप्तिरेव तथापि प्रकृते दोषत्वेन व्यभिचारपदेनोभयं लभ्यते तल्लक्षणत्वव्याप्तिरिति तमेवाऽभिनयेन प्रदर्शयति। तथाहीत्यादि॥ पूर्वपदार्थेति। उन्मत्ताऽऽदिपदाऽर्थेत्यर्थः। एवमग्रेऽपि। अव्ययीभावलक्षणेति। पूर्वपदाऽर्थविशेष्यकबोधजनकत्वरूपतल्लक्षणयाऽसत्त्वरूपेत्यर्थः। अन्यपदार्थप्राधान्यादिति। समासाऽघटकसप्तम्यर्थाऽधिकरणविशेष्यकबोधजनकत्वादलक्ष्ये लक्षणसत्त्वरूपेतरार्थः। बहुव्रीहीति। तल्लक्षणेतरार्थः। एवमग्रेऽपि न। ननु तर्हि कान्यव्ययीभावादिलक्षणानीत्यत आह। सिद्धान्तेत्विति।

वरम्। असम्भवश्चैषामित्याह। भीतपूर्व्यादित्यादि रेखागवयादि निष्ठलाङ्गूलादेर्वास्तवपश्वलक्षणत्ववदेतेषामपि न समासलक्षणत्वम्। बोधकता तु तद्वदेव स्यादिति भावः॥ २९॥

ननु पूर्व्वपदार्थप्राधान्यादि समासे सुवचम्। तथाहि "समर्थः पदविधिरिति" सूत्रे भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु जहत्स्वार्थाऽजहत्स्वार्थपक्षयोरेवैका

लक्ष्यताऽवच्छेदकं तु शक्तिसम्बन्धेनाऽव्ययीभावादिपदवत्त्वम् भूतपूर्व्वाऽऽदीनां लक्ष्यताऽवच्छेदकाऽनाक्रान्तत्वात्तदसङ्ग्रहो न दोषायेति भावः॥ जहत्स्वार्थवृत्तिपक्षमवलम्ब्य मूलमवतारयति। असम्भवश्चैषामिति। अस्य जहत्स्वार्था वृत्तिपक्ष इत्यादिः।एषाम्। लक्षणानाम्। असम्भवो लक्ष्यमात्राऽवृत्तित्वमित्यर्थः। तत्पक्षे पूर्वोत्तरपदयोस्तत्त्वेन ज्ञाताऽपिवृत्तेरभावेन तदर्थघटितानां तेषामुपकुम्भादावसम्भवादिति भावः। मूले। भीतेति। शब्दनित्यतावादिमते यथाश्रुतभीतपूर्वस्याऽव्ययीभावादावसम्भवादाह। सोपीति। व्यवहारोऽपीत्यर्थः। रेखेति। अनयस्य कथमनर्थस्य बोधकत्वमत आशयं प्रकाशयति सारे। रेखागवयेत्यादि। तद्वदेवेति। रेखागवयादिवदेवेत्यर्थः। यथा गवयादावविद्यमानमपि रेखागवयाऽऽदिनिष्ठरेखाऽऽकृतिपुच्छं गवयाऽऽदिपुच्छे सादृश्यमूलकाऽभेदाऽध्यवसायाद्गवयाऽऽदिबोधकतया समासेऽविद्यमानमपि विग्रहवाक्यनिष्ठपूर्वपदाऽर्थो हि प्राधान्यं सादृश्यादव्ययीभावादिबोधकमित्यर्थः॥ २८॥ अजहत्स्वार्थवृत्ति पक्षे पूर्वपदाऽर्थप्राधान्यव्यवहारो न पुनः दुःसूपपाद इत्याशयेन मूलमवतारयति। नन्विति। अनेकधोक्तेष्विति। अथ तेषां सुवचतां किं

र्थीभावव्यपेक्षारूपयोः पर्यवसानं लभ्यते । तत्राऽऽ जहत्स्वार्थापक्षे उक्तव्यवस्थानाऽऽसम्भाविनीत्याशङ्कां मनसिकृत्याऽऽह ।

जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ।
भेदः संसर्ग उभयं चेति वाच्यव्यवस्थितेः ॥ ३० ॥

जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था।पदे वर्णवद् वृत्तौ पदानामानर्थक्यमित्यर्थः । अयम्भावः समासशक्त्यैव राजविशिष्टपुरुषभानसम्भवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम् वृषभयावकादिपदेषु वृषादिपदानामिव । अन्यथा राजपदेन

जहत्स्वार्थावृत्तिराहोस्विदजहत्स्वार्थेत्यादिनेत्यादिः । एकार्थीभावव्यपेक्षेति । एकार्थीभावस्तूक्तः व्यपेक्षा तु समस्तपदानां परस्परसाकाङ्क्षत्वम् । पर्यवसानं लभ्यत इति । समर्थसूत्रभाष्यपर्यालोचनया तु एकार्थीभावः सामर्थ्यमिति पक्ष एव वृत्तिद्वयस्वीकारो बोधभेदेन किं तु ये वृत्तिं वर्त्तयन्ति आहुरित्यादिभाष्याद्वाक्यादेवेयं वृत्तिर्निष्पन्नेति मतमवलम्ब्याऽयं विचार इति लभ्यते॥ समासशक्त्यैवेत्येवकारेणाऽवयवशक्तिव्यवच्छेदः । दृष्टान्तमाह । वृषादिपदानामिवेति । आनुपूर्व्यन्तरघटकत्वाभावविशिष्टाऽऽनुपूर्व्या एव शक्ततावच्छेदकत्वेन वृषभाऽऽदिपदाऽन्तर्गतवृषाऽऽदिसमवेताऽऽनुपूर्व्याः शक्तताऽनवच्छेदकत्ववत्समासाऽन्तर्गतराजाऽऽनुपूर्व्याः शक्तताऽवच्छेदकत्वाऽसम्भवादित्यर्थः। अन्यथा रामाऽऽदिपदादम्यादीनामवयवार्थानामपि पदार्थोपस्थितिशाब्दबोधयोरापत्तिरन्वार्थस्य व्युत्पत्त्यापत्तिर्धनं वनमित्यादौ जप्त्वाऽऽपत्तिश्चावाक्ये तु पदान-

**विग्रहवाक्य इव राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वाद्दृढ-स्य राज्ञः पुरुष इत्यत्रेव अदृढस्य राजपुरुष इत्यस्या-**

प्येकस्यैव राजसम्बन्धी पुरुष इत्याद्यर्थे राज्ञः पुरुषः पुरुषो राज्ञ इत्यादि विशिष्टाऽऽनुपूर्वीद्वयस्य शक्यताऽवच्छेदकत्वकल्पनाऽपेक्षया पदशक्तिकल्पनाया एव लघीयस्त्वादिति भावः । नचैतत्पक्षे विशिष्टरूपोपादानविहितत्वाऽनापत्त्या महाबाहुः सुपन्था इत्यादौ दोषः अनर्थकत्वादेव मर्थवत्त्वनिबन्धनप्रातिपदिकत्वाऽभावेन न लोपाद्यनापत्तिरिति वाच्यम्। वृत्तिप्राग्भाविनमर्थवत्त्वमारोप्य तत्तत्कार्यस्य सूपपादत्वात् इदं च प्रत्ययोत्तरपदयोरिति सूत्रे भाष्ये स्पष्टम्। नचैवं वाप्यश्व इत्यादौ न दोषो जहत्स्वार्थायां वृत्तावानर्थक्यादितीदूतौ च सप्तम्यर्थे इति सूत्रस्थभाष्यविरोधो दुष्परिहरः आरोपिताऽर्थवत्त्वस्य समासाऽन्तर्गतपदेषु स्वीकारादिति वाच्यम् । अर्थग्रहणसामर्थ्येनाऽऽरोपिताऽर्थस्य तत्राऽग्रहणादित्याशयात् । एकस्यैव पदस्य वृत्ति तत् प्राक्कालयोरर्थवत्त्वाऽनर्थवत्त्वे च प्रयोगाऽनुरोध एव शरणम् योगरूढिस्थले तु योगाऽन्तर्भावेण शक्त्यभ्युपगमान्न तदुक्तदोऽपि । न चाऽत्र पक्षे राजाऽऽदिपदैः सर्वथा स्वार्थत्यागे तज्ज्ञानं न स्यात्तस्माच्चैकपदार्थोऽपरपदार्थे विशेषणमिति व्यवहार इति वाच्यम्। विशिष्टेनैव राजाऽऽदिविशिष्टपुरुषाऽऽद्युपस्थापनेनाऽन्वयदोषाऽभावात् अथवाऽन्वयाद्विशेषणं भवतीति भाष्येण द्वितीयस्याऽपि समाधानात् निष्कीर्णास्वपि सुमनःस्वामोदान्वयमात्रेण यथा चम्पकपुटव्यवहारस्तथा सदृशार्थोऽन्वयमात्रेण राजाऽऽदिपदार्थः पुरुषे विशेषणमिति व्यवहार इति तदर्थ इति जहत्स्वार्थवृत्तिपक्षोपपत्तिः परन्त्वेवं हि दृश्यते लोके पुरुषोऽयं परकर्मणि प्रवर्त्तमानः स्वं कर्म जहाति तद्यथा तक्षा राजकर्मणि प्रवर्त्तमानः स्वं कर्म जहाति एवमुक्तं यः प्रजा पुरुषाऽर्थे वर्त्तमानः स्वमर्थं जह्यादुपगुखाऽपत्यार्थे वर्त्तमानः स्वमर्थं

प्यापत्तेरिति। अजहदिति न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था। अयमभिप्रायः। राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः कल्पकाभावात्। क्लृप्तराजपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्वाच्च। क्लृप्तशक्त्यागोऽपि अप्रामाणि-

जह्यादेतल्लक्ष्येऽपि पूर्वपदाऽर्थ एव जहत्स्वार्थत्वम् लभ्यते इति। अन्यथेति। वृत्तौ व्यपेक्षारूपसामर्थ्याऽभ्युपगमे इत्यर्थः। इतरस्याऽपीतरपिना राज्ञः पुरुषो भार्यायाश्चेत्येकत्र द्वयमिति विषयताशालिबोधजनकस्य समुच्चयः। आपत्तेरिति। अस्मन्मते तु पदार्थैकदेशत्वाद्देऽपि शक्त्यभ्युपगमेन राजकीयाभिन्नत्वेनाऽवगते विशेषणाऽन्तराऽयोगाच्च न सेति भावः। अजहत्स्वार्थवृत्तिपक्षस्य भाष्याऽनुसारेणाऽन्यथैवोपपादनाद्व्यपेक्षासामर्थ्यमेक इत्येकीयमताऽऽश्रितानुसृत्याऽऽह। अयमभिप्राय इति। नातिरिक्तेति। क्लृप्तप्रत्येकशक्त्यतिरिक्तेत्यर्थः। कल्पकस्याऽन्यथाऽनुपपत्तिरूपप्रमाणस्याऽभावादित्यर्थः। ननु विशिष्टाऽर्थाऽनुपपत्तिरेव तत्कल्पिका भविष्यतीत्यत आह। क्लृप्तेति। तत्कल्पनस्य। विशिष्टशक्तिकल्पनस्येत्यर्थः॥ ननु स्यादेवं यद्येतत्पक्षे प्रत्येकपदशक्तिकल्पना सैवनेति क्व गौरवाऽवसरोऽत आह। क्लृप्तशक्तीति। वृत्तिप्राक्काले क्लृप्ता या प्रत्येकपदशक्तिस्तत्परित्याग इत्यर्थः। कालभेदेनाऽप्येकस्यैव शब्दस्याऽर्थवत्त्वाऽनर्थकत्वयोर्विरुद्धत्वात् नलोपाऽऽदिव्यवस्थाऽनुपपत्त्या च वृत्तिदशायां तत्स्वीकारस्यैवौचित्यादिति भावः। ननु प्रत्येकशक्त्या तत्तत्पदार्थोपस्थितावपि विशिष्टे शक्त्यनङ्गीकारेण तदनुपस्थित्या कथं तस्य शाब्दविषयतेत्यत आह। तथा चेति। आकाङ्क्षेति। आदिपदाद्योग्यताऽऽदिपरिग्रहः राजपदाऽव्यवहितपुरुषपदत्वाऽऽदिरूपाऽऽकाङ्क्षाऽऽदिकारणसमवधानादित्यर्थः। तथा च प्रत्येकपदा

कः कल्प्येत । तथाचाकाङ्क्षादिवशात् क्रमशस्तथैव विशिष्टार्थबोधः। अयमेव व्यपेक्षापक्षो मतान्तरत्वेन भाष्यकारैरुक्तः। नचात्र मते समासे ऋद्धस्येति विशेषणान्वयापत्तिः। "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति" वार्तिकात्। तथाचैतन्मतवादिनां पूर्वोत्तरपदार्थसत्त्वात्पूर्वपदार्थप्रधान इत्यादिव्यवस्था सूपपादेति भावः। प्रसङ्गाद्वृत्तिभेदमपि निरूपयति। ते पुनरिति। द्वे अपि वृत्ती त्रिविधे वाच्यत्रैविध्यात्। वाच्यमेवाह। भेदइत्यादि भेदः अन्योन्याभावः। तथा च राजपुरुषइत्यादावराजकीयभिन्नइति बोधः। अस्यावाच्यत्वे च राज

र्थोपस्थितिसहकृताऽऽकाङ्क्षाऽऽदिभिरेव विशिष्टबोधसम्भवेन तत्पूर्वं विशिष्टोपस्थित्यपेक्षा यस्यै सा कल्प्येति भावः। अयमेवेति। अयमभिप्रायइत्यादिनोक्त एवेत्यर्थः। भाष्यकारैरितस्य परस्परव्यपेक्षां सामर्थ्यमेक इत्यादिनेति शेषः। उक्ताऽऽपत्तिमुद्धरति। नचात्रेति। अन्वयापत्तिरिति। यथाश्रुताऽभिप्रायेण सम्बन्धिलक्षणायामापत्तेरभावस्य वक्ष्यमाणत्वात्॥ प्रसङ्गादिति। स्मृतिकालाऽवच्छिन्नाऽऽपेक्षताऽवच्छेदकधर्मवत्त्वादित्यर्थः। वृत्तिभेदमिति। वृत्तेः समासाऽऽदिवृत्तेर्भेदं भेदसंसर्गाऽऽदिरूपाऽर्थकृतमित्यर्थः। तदुक्तं भाष्ये सामर्थ्यं नाम भेदःसंसर्गोवा अपरआहभेदसंसर्गौवासामर्थ्यमिति यदि वृत्तौ भेदसंसर्गौन स्यातां तदा सामर्थ्यमेवन स्यात्तदाऽऽसमर्थत्वाऽऽसामर्थ्यं स्येत्यतस्तदर्थकत्वं तस्येति तदभावःभेद इति संसर्गादिना भावत्वादनु

पुरुषः सुन्दर इतिवद्राजपुरुषो देवदत्तस्य वेत्यपि स्यात्। वाच्यत्वे तद्विरोधान्नैवं प्रयोग इति भावः। राजसम्बन्धवानित्येव शाब्दं भानं भेदस्तूत्तरकालमुपतिष्ठतइत्याशयेनाह संसर्गइति। विनिगमनाविरहमस्वामिक्येऽपि राजपुरुषइत्यादिप्रयोगापत्तिञ्च मनसिकृत्वोभयं वाच्यमित्याह। उभयं चेति। तथा चाऽराजकीयाभिन्नोराजसम्बन्धवांश्चायमिति बोधः ॥३०॥ व्यपेक्षावादस्यैवं युक्तिभाष्यविरुद्धत्वात्तन्मूलकः पूर्वपदार्थ प्रधान इत्याद्युत्सर्गोऽप्ययुक्तः। किन्तु रेखागवयन्यायेनोत्सर्गोऽपि परम्परयैव बोधक-इत्याशयेन समाधत्ते।

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।

मीयमानतादात्म्यसम्बन्धाऽवच्छिन्नप्रतियोगिताकाऽभाव इत्यर्थः। तदेवाह। अन्योन्याभावइति। संसर्गइति। भेदाऽविनाभावित्वादनुमीयमानभेदो भेदमूलकः संसर्ग इत्यर्थः। वस्तुतस्तु भेदसंसर्गौ वा सामर्थ्यमिति भाष्यस्य राजाऽऽदिपदसमभिव्याहृतपुरुषाऽऽदिपदेन राजाऽऽदिविशिष्टपुरुषाऽऽदिरूपविशिष्टाऽर्थस्यैव बोध इत्यभिप्रायः। ननु भेदे पृथक्शक्तिबोधकं तत् तादृशबोधाऽनुभवात् रामकृष्णावित्यादिद्वन्द्वभेदस्य वाच्यतया दुरुपपादत्वाच्चेति ॥३०॥ व्यपेक्षावादस्येति॥ अव्यवहितोक्तविधया वर्णितस्येति शेषः। उक्ताऽजहत्स्वार्थपक्षस्य तु निर्दिष्टत्वमेवेति भावः। एवंयुक्तेति। उक्तभाष्येत्यर्थः। भाष्येति। नानाकारकनिघातयुष्मदस्मदादेशप्रतिषेधइत्यादि

बहूनां वृत्तिधर्म्माणां वचनैरेव साधने।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ ३१ ॥

समासइति वृत्तिमात्रोपलक्षणम्। "समर्थः पदविधि-रि" त्यत्र पद मुद्दिश्य योविधीयते समासादिः स समर्थः विग्रहवाक्यार्थाभिधानेशक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात्। पदोद्देश्यकविधित्वञ्च कृत्तद्धित समासैकशेषसनाद्यन्तधातरूपा[illegible] पञ्चस्वपि वृत्तिष्व

भाष्यदूषितत्वादित्यर्थः। वृत्तिमा[illegible] क्तं सत्वार्थकम् पङ्कजत्वा र्थलक्षणया वृत्तिपक्षकोपस्थापकमि[illegible] ऽर्थाऽभिधानेइति। तथा भिधान इत्यर्थः भाष्यादि तस्य समर्थानि[illegible] नमित्यादि। मूले पङ्कजशब्दवदिति सप्तम्यन्ताद्वतिः उपमेये सप्तमी[illegible] त् पङ्कजशब्दे यथाऽव यवशक्त्यतिरिक्तशक्तिस्तद्वत्समासेऽपीत्यर्थः। न [illegible] पङ्कजादौ रूढिस्वीकारे मानाऽभावः समुदायात्पदत्वाऽविशिष्टप्रतीतेरेव [illegible] त्वात् पदानि यतो पस्थितेरूढ्यैकसाध्यत्वात्पङ्कजपदाद्योगेन कुमुदस्यापि बोधप्रसङ्गाच्च रूढि स्वीकारेप्युद्भित्पदेन वृक्षादिरिव योगेन पङ्कजपदेन कुमुदमपि बोध्येतेति तु न यत्र योगरूढिभ्यामेकार्थबोधस्तत्र केवलयौगिकाऽर्थबोधे रूढेः प्रतिबन्धकत्वकल्पनात्॥ अथवा रूढ्या नियमतः स्मृतपद्ममेव कर्त्तृव्यक्तिपरतया डप्रत्ययेन पङ्कजनिकर्त्तृतया बोध्यते बाधकं विना व्यक्तिवचनानां सन्निहितव्यक्तिविशेषपरत्वमिति नियमात् व्यक्तिवचनानां यत्किञ्चिद्व्यक्तितात्पर्यकाणां सन्निहितो यो व्यक्तिविशेषस्तत्परत्वमिति तदर्थः घटेन जलमाहरेत्यत्र सन्निहितसच्छिद्रव्यक्तिबोधवारणाय तत्र बाधकं विनेति। तथा च पङ्कजे तात्पर्य्यसत्त्वे न तदेव योगेनाऽपि प्रतीयते न कुमुदम्, प्रथमकल्पस्तु रूढिज्ञानस्य ग्राह्याऽभावाऽनवगाहित्वाज्जनकज्ञानाऽविघटकत्वाच्च प्रतिब

स्त्येव। विशिष्टशक्त्यस्वीकर्त्तॄणां व्यपेक्षावादिनां मते दूषणं शक्तिसाधकमेवेत्याशयेनाह। पङ्कजशब्दवदिति। पङ्कजनिकर्त्तुरपि योगादेवोपस्थितौ तत्रापि समुदाय

न्यकल्पनाऽसम्भवाच्चोदन्तः सिद्धेर्नायत्वा मणिमन्त्राऽऽदिन्यायेन प्रति-
बन्धकत्वाऽभ्युपगमेऽप्यन्यत्र तथा कल्पने मानाऽभावादित्थं च पङ्कजाऽनु-
भवसामग्रीसत्त्वात्तस्यैव बोधो न कुमुदस्य सतत्त्वं हि सामग्र्यां फलाऽनु-
त्पादे प्रतिबन्धकत्वाऽपेक्षणादिति। तार्किकास्तु दृष्टान्ते न वृत्तिसामान्ये
समुदाये शक्तिरावश्यकीति कथने पूर्वोक्ताऽर्थ एव पर्यवस्यतीति। नन्वजह-
त्स्वार्थवृत्तिकल्पे विशिष्टशक्तेः सम्बन्धांऽशे विरामत्वोक्तत्वाद्वाक्येऽपि संबन्धांश
एव तैः स्वीकारात्को वृत्तिवाक्ययोर्विशेष इति चेदत्राहुः। तत्र हि फ-
लबलात्पदार्थोपस्थितिकाले नियमतः सम्बन्धांऽश उद्बोधकाऽसमवधानक-
ल्पनेन पृथगुपस्थितयोः पदार्थयोः संसर्गबोधः वृत्तौ तु पदाऽर्थोपस्थिति-
समकालमेव नियमतः संसर्गाऽन्ते तद्बोधकसमवधानकल्पनाद्विशिष्टाऽ-
र्थोपस्थितिरिति वैलक्षण्योपपत्तेरत एव प्रासादकाऽऽदौ विशेष्यविशेषण-
भाववैपरीत्ये तु न बोधः तत्राऽप्रयुज्यमानद्वितीयाऽर्थः सम्बन्धश्चोभयं स-
मुदायशक्तिसाध्यमनन्यलभ्यत्वात् लक्षणयैव राजाऽऽदिपदाद्राजाऽऽदे-
रुपस्थितिसम्भवेन तत्र समुदायशक्तिकल्पनगौरवाच्च नामाऽर्थयोरभेदाऽन्व-
ये इत्यादिव्युत्पत्तयश्च योग्यनामाऽर्थविषया इति॥ जहत्स्वार्थवृत्तिपक्षे प-
ङ्कजशब्दस्य पूर्वोक्तरीत्या दृष्टान्तत्वाऽसम्भवेनाऽन्यथा मूलमवतारयति।
विशिष्टशक्त्यस्वीकर्त्तॄणामिति। साधकमिति। विशिष्टशक्तिसाधकमेवेत्य-
र्थः। व्यपेक्षावादिनये राजपुरुष इत्यादौ प्रत्येकपदलक्ष्यापदार्थोपस्थितावा-
काङ्क्षाऽऽदिवशात्पङ्कजादिविशिष्टाऽर्थबोधवत्पङ्कजपदेऽपि तथैव विशिष्टाऽर्थोप-
स्थित्या रूढेरुच्छेदाऽऽपत्तिर्न च सा नचेष्टेत्याह। पङ्कजनिकर्त्तुरपि। तेन

शक्तिर्न सिध्येत् न च पद्मत्वरूपेण पस्थितये सा कल्प्य तइति वाच्यम् । चित्रग्वादिपदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनावश्यकत्वात् । लक्षणयैव तथोपस्थितिरिति चेत् पङ्कजपदेऽपि सा सुवचा । एवं रथकारपदेऽपि तथा च "वर्षासु रथकारोऽग्निमादधीत" इत्यत्रापि विना लक्षणां क्ऌप्रयोगेन ब्राह्मणादिविषयतयैवोपपत्तौ तत्कल्पनां कृत्वा जातिविशेषस्याधिकारत्वं प्रकल्प्यापूर्व्वविद्याकल्पनमित्ययुक्तं स्यादिति भावः ।

रूपेण पद्मस्याऽपीत्यर्थः । योगादिवेति । अवयवशक्त्येवेत्यर्थः । तत्राऽपि । पङ्कजाऽऽदिपदेऽपि । तत्र तत्स्वीकारे न किमपराद्धं समासे विशिष्टशक्त्येति भावः सा समुदायशक्तिः । तत्कल्पनस्य रूढिकल्पनस्य । तथोपस्थितिरिति । स्वामित्वादिना स्वाम्याद्युपस्थितिरित्यर्थः । सुवचेति । पद्मत्वाऽऽदिनोपस्थितिरपि लक्षणयेति वक्तुं शक्यमित्यर्थः । अधिकरणविरोधमपि तत्राऽऽह । एवमिति । लक्षणामिति । निरूढलक्षणामित्यर्थः । तस्याः शक्तिसमकक्षत्वादिति भावः । योगेनेति । प्रत्येकपदवृत्त्युपस्थाप्यरथकर्तृत्वेनेत्यर्थः । उपपत्ताविति । शास्त्रसङ्कोचमन्तरेणाऽप्यनुष्ठाननिर्वाह इत्यर्थः तत्कल्पनामित्यादि । रूढिकल्पनामित्यर्थः । ताङ्कल्पयित्वेति यावत् । जातिविशेषस्येति । रथकारस्तु माहिष्यात्करण्यां यस्य सम्भव इति स्मृतिसङ्केतितजातिविशिष्टस्येत्यर्थः । अयुक्तमिति । विनैव शास्त्रसङ्कोचं विधिसाफल्या-ध्यादिति भावः ॥ ननु प्रतिबन्धिरनुत्तरत्वं किं च पङ्कजपदे लक्षणाऽपि न सुवचा तथाहि सा किं पङ्कजपदे उत ड प्रत्यये न तावदाद्यः समुदाये शक्त्यभावेन तद्घटितलक्षणाया अप्यसम्भवात् । किं च जहत्स्वार्थायास्तस्या

साधकान्तरमाह बहूनामिति वृत्तेर्धर्म्मा विशेषणलिङ्गसङ्ख्याद्ययोगादयस्तेषां वचनैरेव साधने गौरव

स्तथा सम्भव एव अवयवाऽर्थविरोधिन्या रूढेरभावात् जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनीत्यभियुक्तोक्तेः। यथा मण्डपं भोजयेत्यत्र मण्डपपदस्य गृहविशेषे रूढेर्योगविरोधिनी रूढ्यर्थग्रहे मण्डपानकर्तृत्वरूपयोगाऽर्थस्य बाधात् तत्र रूढेर्योगाऽपहारितेति प्रवादादेव शक्त्या मण्डपानकर्तृबोधाऽसम्भवान्मण्डपपदस्य मण्डपानकर्त्तरि लक्षणा। तथा च तत्र रूढ्यर्थग्रहसम्बन्धिताऽवच्छेदकतया गृहीतचैत्रत्वादिनैव तद्बोधो न मण्डपानकर्तृत्वेन न च तथा प्रकृते जहत्स्वार्था त्ववयवाऽर्थप्रतीत्यनुपपत्त्या न वक्तुं शक्या। नाद्यः प्रकृतार्थस्याऽनन्वयाऽऽपत्तेः तदर्थे प्रत्ययस्याऽसाधुताऽऽपत्तेश्चेति लक्षणाऽनवसरादनापत्त्या तत्र विशिष्टशक्त्यभ्युपगमः॥ राजपुरुष इत्यादौ तु प्रत्येकपदवृत्त्याऽपि विशिष्टाऽर्थबोधनिर्वाहे समुदायशक्तिकल्पनं तत्राऽनुचितमेव नाऽपि रथकाराऽधिकरणबोधः यौगिकाऽर्थरथकरणनिमित्ते वर्षविधानस्य मन्त्रस्य विशिष्टाऽऽधानाऽपेक्षया लघुत्वेऽपि ऋभूणां त्वा देवानामिति मन्त्रवर्णादृभुसौधन्वनपर्यायप्रतिलोमजातिरथकारस्यैव तदधिकारावगत्या लाघवाऽनादरेण रूढाऽर्थे तत्र विशिष्टाऽऽधानकल्पनात् अत्राऽऽपूर्वविद्याऽध्ययनकल्पनागौरवं फलमुखत्वात् प्रकृते राजपुरुषाऽऽदिसमुदाये शक्तिग्राहकं न तादृशं कोशाऽऽदि येन तद्बलादेव यत्राऽर्थः परित्यज्येतेत्याशयेन मूलमवतारयति॥ साधकान्तरमिति॥ लिङ्गेति॥ कुक्कुटाण्डमित्यादौ कुक्कुटपदार्थे त्वस्या; प्रतीतेरिति भावः॥ सङ्ख्येति॥ राज्ञो राज्ञां वा पुरुष इति वाक्य उपसर्जनपदानि सङ्ख्याविशेषयुक्तस्वार्थमभिदधति समासे त्वन्तर्भूतस्वाऽर्थं प्रधानाऽर्थमभिदधतीति भाष्यात्तत्र सङ्ख्याविशेषस्याऽप्रतीतेरिति भावः॥ सङ्ख्यादीत्यादिपदादिमे तद्धर्म्म कार्यीभावाऽकृता विशेषाः सङ्ख्याविशेषो व्यक्ताऽभिधानमुपसर्जनवि

मित्यर्थः । अयं भावः विशिष्टशक्त्यस्वीकारे राज्ञः पुरुषइत्यत्रेव राजपुरुषइत्यत्रापि स्याद्विशेषणाद्न्वयः राजपदेन स्वतन्त्रोपस्थितिसत्त्वात् । विभाषावचनञ्च समासनियमवारणाय कार्य्यमिति । ननु "सविशेषणानामिति" वचनान्न विशेषणाद्न्वयः विभाषा वचनञ्च कृतमेवेत्याशङ्कां समाधत्ते । वचनैरेवेति । न्यायसिद्धमेव सूत्रम् । व्यपेक्षाविवक्षायां वाक्यस्य एकार्थीभावे समासस्येति स्वभावतएव प्रयोगनियमसम्भवात् । सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेशतयान्वयासम्भवात् न्यायसिद्धमिति भा-

शेषाणां चाऽयोग इति भाष्योक्तस्य राज्ञो गवाश्वपुरुषा देवदत्तयज्ञदत्तविष्णुमित्राणां गौरित्यादौ चाऽयोगस्य च सङ्ग्रहः ॥ वचनैरिति ॥ सविशेषणानां वृत्तिर्नेत्यादिभिरित्यर्थः ॥ उक्तार्थमेवप्रकटयति ॥ अयम्भावइति ॥ न्यायसिद्धमेवसूत्रमिति ॥ इह व्यपेक्षायां समासो न भवत्येकार्थीभावे वाक्य न भवति विभिन्नविषयत्वेन बाध्यबाधकभावाऽसम्भवादिति न्यायसिद्ध-विभाषावचनं नाऽपूर्वमित्यर्थः ॥ तदुक्तं भाष्ये न संज्ञाया भावाऽभावाविष्येते इति एकार्थानां विकल्पनाभावाऽर्थौ विकल्प्यतेति तद्भावः ॥ अन्वयासम्भवादिति ॥ वृत्तौ ह्युपसर्ज्जनपदेन प्रधानाऽर्थाऽभिधायिना भाव्यम् स्वस्य विशेषणाऽऽकाङ्क्षायां च प्राधान्यमिति कथमेकदा प्राधान्यमेकार्थीभावस्याऽस्य युगपद्गुणप्रधानभावविरोधादिति न्यायसिद्धमेवेत्यर्थः ॥ अतए-

वः। अतएव व्यपेक्षापक्षमुद्भाव्य अथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति भाष्यकारेण दूषणमप्युक्तम् ॥ ३१ ॥

तथा धवखदिरौ, निष्कौशाम्बिर्गोरथो घृतघटो गुड़धानाः केशचूड़ः सुवर्णालङ्कारो द्विदशाः सप्तपर्ण इत्यादावितरेतरयोगादिक्रान्तयुक्तपूर्णामिश्रसङ्घातविकारसुच्प्रत्ययलोपो, वीप्साद्यर्थवाचनिका वाच्यइत्यतिगौरवम् स्यादिति दूषणान्तरमाह ।

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥३२॥

आदिना घनश्यामः हंसगमनइत्यादाविवादीनां पूर्व्वोक्तानाञ्च सङ्ग्रहः । दूषणान्तरमाह । बहुव्युत्पत्तिभञ्जनमिति । अयमाशयः चित्रगुरित्यत्र स्वा-

वेति ॥ व्यपेक्षावादस्याऽऽपातरमणीयत्वादेवेत्यर्थः ॥ दूषणमप्युक्तमिति ॥ अस्य नानाकारकत्वे निघातयुष्मदस्मदादेशप्रतिषेधः अयं दण्डो हराऽनेनेत्यादिनेति शेषः ॥ ३१ ॥ कैयटोक्तं दोषसङ्घातमाह ॥ तथेत्यादि ॥ इति दूषणान्तरमिति ॥ इतराकारकं दूषणान्तरमित्यर्थः ॥ पूर्वोक्तानामिति ॥ निष्कौशाम्बिरित्यादौ क्रान्ताद्यर्थवाचकानां लोपवचनमित्यादिकानामित्यर्थः ॥ एतद्दूषणोद्धारस्य वक्ष्यमाणत्वादाह ॥ दूषणान्तरमिति ॥ व्युत्पत्तिभङ्गमाविष्कर्त्तुमाह ॥ अयमाशयइति ॥ स्वपदेति ॥ वाक्ये इति शेषः

स्वरूपादव्यभिचरितसम्बन्धेभ्यस्त्वान्यत्रेत्यर्थः। रूढि रुक्ता। द्वितीयं यथा शुक्लत्वं अत्र तदस्यास्त्यस्मिन्निति "मतुपो गुणवचनेभ्यो मतुपो लुगिष्टः" इति लुप्तत्वात्तद्धितान्तत्वेऽपि घटः शुक्ल इत्यभेदप्रत्ययाद्गुणस्यैव प्रकारत्वेन भानं जायते तृतीये सतोभावः सत्तेति अत्र जातावेव प्रत्ययइति दिक् ॥४८॥

रिति व्यक्तिनिष्ठाऽत्यन्ताऽभावाऽप्रतियोगी सम्बन्धः समवायाऽऽत्मको यस्य जात्यादेस्तद्विशिष्टवाचकादित्यर्थः॥ नाऽतः पाकादिना नाशेन स्वाऽऽश्रयनिष्ठाभावप्रतियोगिना तत्त्वम्॥ उक्तेति॥ दामोदरत्वमित्यादौ जातिविशेषेण भानादिति अन्येनेत्यर्थः॥ द्वितीयंयथेति ॥ अभिन्नरूपोदाहरणं यथेत्यर्थः तद्धितान्तत्वेपीत्यपिना तदुत्तरभावप्रत्ययेन सम्बन्धाऽभिधानं प्राप्नोतीति सूचितम्॥ अभेदप्रत्ययादिति॥ इदं च षष्ठ्यर्थे विहितमतुपः सम्बन्धाऽर्थकत्वशङ्कानिरासाय तृतीयमित्यस्योदाहरणं यथेति शेषः॥ सतइति॥ सच्छब्दजन्यबोधे प्रत्ययार्थकर्त्र्यर्थे सत्तायाः प्रकारतया भानात्तदुत्तरभावप्रत्ययेनाऽपि सैवाऽभिधीयत इत्यर्थः॥ तथा चोक्तस्थलेषु भावप्रत्ययान्तात् सम्बन्धाऽभानादुक्तवाक्ये अन्यत्रेत्युपात्तमिति भावः॥ ननु शुक्लत्वं सत्त्वमित्यादौ सतोऽपि शौक्ल्यादिसम्बन्धस्य भावप्रत्ययेनाऽनभिधानवद्राजपुरुष इत्यत्राऽपि तदनभिधानं स्यात्तत्राऽपि राजाऽऽदीनां पुरुषाऽऽदिपदार्थे स्वत्वाऽऽदिसम्बन्धेन प्रकारतेत्यस्याऽपि वक्तुं शक्यत्वादित्यत आह ॥दिगिति॥ तदर्थस्तु निर्वक्ष्यमाणभावे तस्य भाव इति सूत्रेण त्वतलादयो विधीयन्ते॥४८ ननु जातित्वादिना जातावेव सम्बन्ध एवेति नियमस्तथा च यत्प्रकृतेर्यद्धर्म॥ प्रकारकबोधः शास्त्रसम्मतः स एव धर्मस्त्वाद्यभिधेय इति कृष्यादिभिन्न प्रकृतेः शुक्लत्वादिना सम्बन्धप्रकारकबोधस्य भाष्यसम्मतत्वात्तस्यैव भाव

दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता त-
द्धितस्येति वदन्तं मीमांसकम्मन्यं प्रत्याह ।

अत्रार्द्धजरतीयं स्यात् दर्शनान्तरगामिनाम् ।
सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु ॥४१॥

(अत्र) भावप्रत्ययविषये । तथा हि दामोदरत्वं घटत्वमित्यादौ भावप्रत्ययस्य सम्बन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यादिष्वपि तदभिधानं न स्यात् । प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाऽभिधीयते । अन्यथा घट

प्रत्ययेनाऽभिधानमुचितमिति नोक्तेषु भावप्रत्ययस्य जात्याद्यभिधायकत्वमिति ॥ प्रकृत्यर्थविशिष्टद्रव्यमात्रवचनेति पाठः॥मात्रपदेन सम्बन्धव्यवच्छेदः ॥ तद्धितस्येति ॥ इन्यादेरित्यर्थः॥ सम्बन्धाऽनभिधायकत्वेनेति ॥ प्रकृतिजन्यबोधे तस्याऽप्रकारत्वादिति भावः ॥ तदभिधानम् ॥ सम्बन्धाऽभिधानम् ॥ नस्यादिति ॥ किन्तु दण्डस्यैवाऽभिधानं स्यान्न च तदभिधानमिष्टमिति भावः ननु प्रकृतिजन्यबोधविषयत्वे सति प्रकृत्यर्थवृत्तित्वं भावत्वम् तच्च दण्डसम्बन्धस्याऽक्षतमिति भावप्रत्ययेन तदभिधानं भविष्यतीत्यत आह ॥ प्रकृतिजन्यबोधइति ॥ उक्ताऽर्थस्य भावत्वे तु दामोदरत्वमित्यादौ जातिगुणसम्बन्धस्याऽपि भावाऽर्थता प्रसज्येतेति भावः ॥ क्रमेण दलद्वयव्यावर्त्यमाह ॥ अन्यथेति ॥ एकतरदलमात्रोपादाने इत्यर्थः॥तदुत्तरेति॥ घटदण्डिपदोत्तरेत्यर्थः ॥ तथा च घटत्वमित्यादौ द्रव्यत्वस्यैव त्वस्यार्थे दण्डीत्यादौ दण्डसम्बन्धस्याऽप्यऽपदार्थतयाऽप्रकारत्वादभावत्वेन न तस्य

त्वमित्यत्र द्रव्यत्वादेर्द्दण्डित्वमित्यादौ दण्डादेश्च तद्गुत्तरभावप्रत्ययवाच्यतापत्तेः । न च तन्मते दण्डीत्यादिबोधे सम्बन्धः प्रकारः । यत्तु

यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः ।
तदा गत्यन्तराभावात्सम्बन्धोवाच्य आश्रितइति ।

तन्न इनादेः सम्बन्धिवाचकत्वेनोपपत्तौगत्यभावाऽभावात् प्रपञ्चितं चैतदादावेव वैयाकरणभूषणे ननु

प्रत्ययार्थत्वसम्भव इति भावः ॥ वस्तुतस्त्वन्त्यदलोपादानं व्यर्थं मतुबादीनां सम्बन्ध्यर्थकतया दण्डीत्यादिवाक्यजन्यबोधे सम्बन्धस्यैव प्रकारत्वेन दण्डादीनां प्रकृत्यर्थेऽप्रकारत्वादेत्राऽनतिप्रसङ्गात् मीमांसकैकदेशिमते मत्वर्थीयानां सम्बन्धवाचकत्वेऽपि तदाश्रिताऽऽश्रयविशेष्यकबोधस्यैव तैरभ्युपगमेऽपि प्रकृतिजन्यबोधविशेष्यांऽशे दण्डादीनामप्रकारत्वेन प्रयोजनविरहादिति विभावनीयम् ॥ सम्बन्धः प्रकारइति ॥ अस्य येन तस्य त्वादिप्रत्ययवाच्यता स्यादिति शेषः॥ मीमांसकमतमुपन्यस्यति ॥ यत्त्विति ॥ अत्र ॥ दण्डित्वमित्यादौ ॥स्वसमवेतः॥ त्वादिप्रकृत्यर्थसमवेतः॥ नीलत्वमित्यादौ नीलादिगुणवन्न सम्भवति यतोऽतः सम्बन्धस्यैव भावप्रत्ययवाच्यत्वमाश्रितमित्यर्थः ॥ दण्डादेः प्रकृत्यर्थांऽशे प्रकारत्वेऽपि प्रकृत्यर्थाऽसमवेतत्वेनाऽभावत्वादिति भावः ॥ सम्बन्धिवाचकत्वेनेति ॥ तदस्यास्त्यस्मिन्निति मतुपः सम्बन्धे विधानेऽपि दण्डी पुरुष इति सामानाधिकरण्याऽनुरोधात् सम्बन्धिवाचकत्वस्याऽऽवश्यकत्वादिति भावः ॥ गत्यभावाभावादिति ॥ सम्बन्धस्यैव भावत्वसम्भवादिति भावः ॥ आदावेवेति ॥ एवं वैश्वदेवीत्यादिसामानाधिकरण्यस्योक्तरीत्यैवोपपत्ते रित्यन्तग्रन्थेन भूषणे इत्यर्थः ॥ तवा

तत्रापीदं वैषम्यं कथमित्यत आह सिद्धान्तेत्विति जायन्त इति वक्ष्यमाणविशेषणेऽन्वितम् सिद्धान्ते प्रकृतिजन्यबोधे प्रकारे त्वादयोजायन्त इत्यर्थः प्रकृतिजन्यबोधे प्रकारइत्यत्रपक्षद्वयं स्थितमितियोजना ॥४९॥ तौ पक्षावाह ।

प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थे प्रकारताम् ।
धर्ममात्रं वाच्यमिति यद्वा शब्दपरा अमी ॥
जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ॥५०॥

प्रयोगे उपाधिं निमित्तं प्रकृत्यर्थे प्रकारताम् प्रका

पीति ॥ वैयाकरणस्याऽपीत्यर्थः ॥ इदम् ॥ क्वचिज्जात्यादिवाचकत्वम् क्वचित्सम्बन्धवाचकत्वमित्येवं रूपं वैषम्यमित्यर्थः॥४९॥प्रयोगइति॥शब्दप्रवृत्तावित्यर्थः ॥ निमित्तमिति ॥ यद्धर्मवत्त्वेन ज्ञातेऽर्थे यश्शब्दः प्रयुज्यते स धर्मस्तच्छब्दप्रवृत्तौ निमित्तमित्यर्थः ॥ स दामोदरत्वमित्यादौ जातिः शुक्लत्वमित्यादौ गुणएवेति ॥ ननु प्रकृतिजन्यबोधप्रकारत्वेनैवोपाधेः सङ्ग्रहे तस्य पृथगुपादानं व्यर्थमत आह ॥ प्रकृतिजन्येति ॥ स च प्रकृत्यर्थवृत्तिरसाधारणो धर्मस्तस्मिन्नसाधारणत्वं तदितराऽवृत्तित्वे सति तद्वृत्तित्वं सत्यन्तोपादाने द्रव्यत्वादेर्घटाऽसाधारण्यं विशेष्योपादानाच्च तद्गगनत्वादिनिरासः तेन रूपेण धर्मो भावप्रत्ययवाच्यम्॥ तत्र तत्पदार्थस्य घटादेस्त्वादिप्रकृत्यैव लाभादनन्यलभ्य इतरावृत्तित्वादौ भावप्रत्ययस्य शक्तिः॥तत्राऽपीतरवृत्तित्वाभावः साकल्यं वृत्तिमत्त्व विशकलितमर्थः इतरवृत्तित्वप्रतियोगिकाऽभावस्याऽतिप्रसक्तत्वादितरवृत्तित्वत्वाऽवच्छिन्नप्रतियोगिताकाऽ

रतया भासमानं धर्मं वाच्यतया आश्रित्य त्वादयो जायन्ते प्रकृतिजन्यबोधेप्रकारस्त्वाद्यर्थइति यावत्। ननु घटत्वमित्यत्र प्रकारत्वात्तदुत्तरभावप्रत्ययेन घटत्वत्वस्यापि वाच्यता स्यादित्यत्रेष्टापत्तिमाह धर्म्ममात्रमिति नत्वत्र लघुगुरुविचारइत्यभिप्रायः॥ तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव घटत्वघटत्वत्वादिरूपत्वात्।

भावस्याऽप्रसिद्धत्वाद्घटत्वादौ बाधाच्च विशिष्टस्य प्रकृत्यत्वाऽसम्भवात् अत्र च प्रकृतिजन्यबोधे येन सम्बन्धेन प्रतिपाद्यताऽवच्छेदकधर्मस्य प्रकारता तेन सम्बन्धेनेतराऽवृत्तित्वं वृत्तिमत्त्वं च बोध्यम्॥ नाऽतः कालाऽऽदौ कालिकाऽऽदिसम्बन्धेन घटत्वस्य वृत्तावपि क्षतिः न वा घटत्वमित्यादौ कम्बुग्रीवादिमत्वस्य भानम् प्रमेयत्वमित्यादौ त्वितराऽवृत्तित्वांऽशो न भासते ऽप्रसिद्धत्वात् किन्तु सकलं प्रमेयवृत्तित्वमात्रम्॥ न च विशिष्टस्याऽनतिरिक्तत्वमते गुणाऽन्यत्वविशिष्टसत्त्वमित्यादौ विशिष्टसत्वे विशिष्टसदितरावृत्तित्वस्य महत्वमित्यादौ सकलमहद्वृत्तित्वस्य महत्परिमाणादावसत्त्व इति वाच्यम्॥ तदितरत्वव्यापकाऽत्यन्ताऽभावप्रतियोगिताऽवच्छेदकतद्वृत्यन्यताऽभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वे दलद्वयतात्पर्य्यात्तथाऽऽद्यदलं घटत्वमित्यादौ द्रव्यत्वादेरसाधारण्यवारणायेति भावः॥ प्रकारत्वादिति॥ घटत्वादिति घटत्वासाधारणधर्मत्वादित्यर्थः॥ लघुगुर्विति॥ अयं भावः॥ धर्मस्याऽसाधारणधर्मत्वेन वाच्यत्वेऽप्येकत्वमित्यादौ परिमाणादौ नानाऽऽपत्तिः उक्ताऽसाधारण्यस्य परिमाणे सत्त्वात्॥ न च प्रकृत्यर्थताऽवच्छेदकनिरूपितत्वविशिष्टसमवायसम्बन्धेन तदितराऽवृत्ति

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः।
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते।

सा नित्या सा महानात्मा तामाहुस्त्वतलादय इति वाक्यपदीयात्। उक्तञ्च "तस्य भावस्त्वतलावि-ति" सूत्रे वार्त्तिककारैः "यस्य गुणस्य भावाद् द्रव्ये

त्वं तद्वृत्तित्वं च विवक्षितम्॥ न च तेन सम्बन्धेन परिमाणं तत्र वृत्तीति बोध्यादोष इति वाच्यम्॥ तथा सत्यनन्तशक्तिकल्पनाऽवश्यकत्वे तत्तद्धर्मत्वेनैव धर्मे शक्तिरस्तु किमितराऽवृत्तित्वाऽऽदिगौरवसहिष्णुतया॥ अत एव पृथक्त्वमित्यादौ प्रकृत्यर्थताऽवच्छेदकगुणान् भावप्रत्ययः प्रतिपादयति प्रतीतिस्तु ताद्रूप्येण धर्मत्वेन वेत्यन्यदिति गुणदीधितावुक्तं सङ्गच्छत इ-ति॥ एतेन भावत्वाऽऽदिप्रत्ययेन कम्बुग्रीवादिमत्त्वमित्यादौ गुरोरपि ध-र्मस्य कम्बुग्रीवादिमत्त्वस्य बोधनेन तद्घटत्वमित्यादावपि गुरोर्धर्मस्य त्वप्रत्ययेन बोधनसम्भवादाशङ्कानिःसारेत्यपास्तम्॥ धर्मस्य भावप्रत्यय-वाच्यत्वे सम्मतिमाह॥ सम्बन्धिभेदादिति॥ जातिः पदार्थ इति कक्ष्ये साधकमिदम् सम्बन्धिभेदादनुयोगिभेदात् भिद्यमाना गवेतराऽसमवेतत्वे सति सकलगोसमवेतत्वादिना तद्व्यक्त्युपरागेण वा पार्थक्येन प्रतीयमा-ना गवादिनिष्ठा ब्रह्मसत्तैव जातिरित्युच्यते तस्यां सर्वे शब्दा वाचकत्वेन व्यवस्थिता इत्यर्थः॥ तदेव व्यक्तीकरोति॥ तामिति॥ तां तत्तद्व्यक्त्युपर-क्तां सतीमित्यर्थः॥ धात्वर्थमिति॥ आकृत्यधिकरणन्यायेन जातिमन्ये क्रियामाहुरिति पक्षाऽभिप्रायेण वा महानित्यात्मविशेषणम्॥ क्वचित्त्वा-त्वादिः क्वचित्सम्बन्धार्थ इत्युक्ताऽर्थे वार्त्तिकं प्रमाणयति॥ उक्तञ्चेति॥ गुणशब्दस्य वैशेषिकाणां रूपादिष्वेव प्रसिद्धेः॥प्रकृतोपयुक्ताऽर्थपरतामाह

शब्दनिवेशस्तदभिधाने त्वतलाविति"। (यस्य गुणस्य) विशेषणतया भासमानस्य (भावात्) आश्रयस्यात् (द्रव्ये) विशेष्ये (शब्दनिवेशः) शब्दप्रवृत्तिः तस्मिन् वाच्ये त्वतलावित्यर्थः। तथा च रूपादिशब्देभ्यो जातौ, शुक्लाणुदीर्घमहदादिभ्यो गुणे, पाचकादिशब्देभ्यः क्रियायां, घटादिशब्देभ्यो जातौ, प्रत्ययः रूपादिशब्दानां जातिप्रकारकबोधजनकत्वात्। पाचकादिशब्दानां क्रियाप्रकारकबोधजनकत्वे तस्यां प्रत्ययः। संसर्गप्रकारकबोधजनकत्वमिति मते च संसर्ग इति व्यवस्था सूपपादेति भावः। तत्र जातिवाचकानां व्यक्तय एव शक्यतावच्छेदिकाः। तथा च

विशेषणतयेति॥ तथा च प्रकृते गुणपदमुपसर्ज्जनीभूतार्थपरमिति भावः॥ पर्य्यवसितमाह॥ तथाचेति॥ रूपादीत्यादिना रसादिर्गुणपरस्यकादेश्च सङ्ग्रहः॥ बोधजनकत्वइति॥ बोधजनकत्वमत इत्यर्थः॥ व्यपेक्षावादे क्रियाकारकभावसम्बन्धे न क्वद्यर्थकर्त्रादौ धात्वर्थस्यैव प्रकारतया भानोपगमादिति भावः॥ स्वसिद्धान्तमनुसृत्याह॥ संसर्गप्रकारकेति॥ सूपपादेति॥ भावप्रत्ययो जाताववेत्याद्यनियमादिति भावः॥ तत्रेति॥ जात्यादिवाचकभावप्रत्ययेषु मध्ये इत्यर्थः॥ जातिवाचकानामिति॥ स्वार्थनिष्ठशक्ते रिति शेषः गुणाद्यात्मकभाववचनानां शुक्लत्वाऽऽदिशब्दानां जातेः शक्यताऽवच्छेदकत्वसम्भवादाह॥ जातिवाचकानामिति॥ भावप्रत्ययानामिति शेषः॥अवच्छेदिका इति॥ उपस्थितत्वाद्घटत्वादिजातिनि-

घटत्वमित्यत्र घटवृत्तिरसाधारणो धर्म्म इत्यादि द्रष्टव्यम् । पक्षान्तरमाह यद्वेति "यद्वा सर्व्वे भावाः स्वेनार्थेन भवन्ति स तेषां भाव" इति वार्त्तिकोक्तेः॥ यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपि (भवन्ति) वाचकत्वेन प्रवर्त्तन्ते इति भावाः शब्दाः (स्वेन रूपेणअर्थेन) (भवन्ति) प्रवर्त्तन्ते अतः (स तेषां भावः) प्रवृत्तिनिमित्तमित्यर्थः। अयं भावः। अर्थवच्छब्दोऽपि द्रव्ये प्रकारः हरिहरनलेक्ष्वाकुयुधिष्ठिरवशिष्ठादिशब्दे

ष्वशक्तेः स्वेतराऽवृत्तित्वाऽवच्छिन्ननिखिलस्ववृत्तित्वरूपाऽऽधेयत्वाऽऽदिसम्बन्धेनाऽवच्छेदिका इत्यर्थः ॥ तेन न द्रव्यत्वादिनिष्ठशक्तेर्घटाऽवच्छिन्नत्वम्॥अवच्छेदकाऽनुगमकं च गोत्वादिकमेवेति भावः॥ पर्य्यवसितबोधमाह ॥ घटवृत्तिरिति ॥ पक्षान्तरमिति ॥ तच्छब्द एव भावप्रत्ययवाच्य इति मताऽन्तरमित्यर्थः ॥ अथ कस्माद्गौरित्युच्यते गौरित्येव हि गौर्गविवर्त्तते इत्योविच्यका इति निरुक्तमप्येतत्पक्षे उपष्टम्भकम् बोध्यम्॥ तत्सूचनप्रयोजनकोपीति ॥ यद्वा शब्दघटितोक्तवार्त्तिकसूचनप्रयोजनकोऽपीत्यर्थः॥अपिना पक्षान्तरसङ्ग्रहः वार्त्तिके स्वेनाऽर्थेन भवन्तीत्यत्र स्वशब्दस्याऽऽत्मीयवचनतयाऽऽत्मीयाऽर्थेन जात्यादिना प्रवर्त्तत इत्यर्थात्कथं पक्षान्तरपरता कथं वाऽर्थाऽऽवृत्तेर्धर्मस्य शब्दस्य भावत्वं चेत्यत आशयं प्रकाशयति ॥ अयम्भावइति ॥ जात्याद्यर्थस्य द्रव्यांशे विशेषणतायाः प्रसिद्धत्वात्तद्दृष्टान्तेन शब्दस्याऽपि तां साधयति ॥ अर्थवदिति ॥ जात्यादिवदित्यर्थः॥शब्दस्याऽर्थविशेषणतायामसाधारणस्थलमाह ॥ हरिहरेति ॥ कश्चिद्दासीदित्यनेन शब्दस्याऽपि तां साधयति जात्यादिप्रकारकबोधाऽसम्भवो

भ्यस्तत्तद्वाच्यः कश्चिदासीदितिशब्दप्रकारकबोधस्य सर्व्वसिद्धत्वात्। अन्यथा वनौषधिवर्गादेर्नागरिकान् प्रत्यबोधकत्वापत्तेश्च। एवमेवाप्रसिद्धार्थकपदेष्वनुभवः सर्व्वसिद्धः नतु घटादिपदेष्विव तत्तज्जात्यादिरूपेण। तथा चोभयमवच्छेदकम्। यस्य तथा शक्तिग्रहस्तस्य जात्यादिरूपेणैवोपस्थितिः। पदप्रकार

ध्वन्यते इर्य्यादौ सन्निकर्षाऽभावेनाऽनुपस्थितहरित्वाऽद्यवच्छेदेन शक्त्यग्रहाऽभावेन तद्धर्मप्रकारकशाब्दबोधाऽसम्भवदुपस्थितपदस्यैव विशेषणत्वमभ्युपगम्य शाब्दबोध उपपादनीयो यथा च शब्दादुपस्थितिस्तथोपपादिता नामार्थनिरूपण इति भावः॥ अन्यथेति॥ अर्थांऽशे शब्दस्य प्रकारत्वाऽनभ्युपगम इत्यर्थः॥ आरण्यकानां सन्निकर्षेण जातिधर्मित्वाऽवच्छेदकशक्तिग्रहसम्भवादुक्तम्॥ नागरिकानिति॥ एवमेवेति॥पदप्रकारेणैवेत्यर्थः॥ अप्रसिद्धेति॥ अगृहीतजात्यादिविशिष्टशक्तिकपदेष्वित्यर्थः॥ जात्यादिभेदेनेति॥ तद्विशेषेणेत्यर्थः॥ क्वचित्तु जात्यादिरूपेणैवेत्येवपाठः॥ उभयमिति॥ जात्यादिरूपं पदं चेत्यर्थः॥ अवच्छेदकमिति॥ शक्त्यवच्छेदकमित्यर्थः॥ ननु जात्याद्यनुपस्थितिदशायामयमर्थ एतत्पदवानिति शक्तिग्रहोऽप्यसम्भवदुक्तिकोऽत आह॥पदप्रकारकइति॥ विशिष्टघटपदत्वाऽऽदिरूपेणेत्यर्थः॥ यद्यपि सर्व्वे भावा इति सर्वशब्दोपादानादेतत्काल्ये शब्दस्यैव सर्वशब्दप्रवृत्तिनिमित्तत्वमवगम्यते तथापि घटत्वाऽऽदिना गृहीतशक्तिकघटाऽऽदिपदाद्घटत्वप्रकारकबोधस्य सार्वजनीनप्रसिद्धिसिद्धस्याऽपह्नोतुमशक्यतया प्रायशः प्रसिद्धार्थकस्थले शब्दाऽप्रकारकबोधस्याऽननुभवेन चैतत्काल्पेऽपि जात्यादीनां शब्दप्रवृत्तिनिमित्तत्वमङ्गीकरणीयमेव॥ वार्त्तिकं तु

कः शक्तिग्रहस्तु विशिष्यनापेक्षितः किं तु इदं पदं क्वचिच्छक्तं साधुपदत्वादित्यादिरूप एवापेक्ष्यते इति विशिष्याऽगृहीतशक्तिकेभ्यस्तथैव बोधः । तथा च

भावशब्दस्याऽप्रसिद्धाऽर्थकशब्दपरतया योऽर्थं तत्र निमित्ताऽन्तराऽभावेन वार्त्तिकबलाच्छब्दप्रवृत्तिनिमित्तत्वाऽवधारणात् यथा क्वचि पञ्चकशलाकु पदे ॥ अत एवाऽनुदात्तङित इति सूत्रे ऽनुदात्तङितौ द्वावात्मनेपदमित्यस्य तङानौ द्वावर्थ इति तत्र सङ्ख्याताऽनुदेशः प्राप्नोतीति यथासङ्ख्यसूत्रे भाष्यकृदुक्तं सङ्गच्छते॥अन्यथा नवानां तङर्थत्वेनाऽऽत्मनेपदत्वेन बोधे सर्वेषामेकत्वेन तत्र च द्वावित्यस्यानुपपत्तिः स्पष्टैवाऽत एव सारज्ञताऽप्युभयमवच्छेदकमित्युपसंहृतं क्वचिच्छब्दोपीति तदाशय इति॥कथं तर्हि तत्र शक्तिग्रहोऽत आह॥किन्त्विति॥क्वचिच्छक्तमिति॥किञ्चिन्निष्ठशक्तिनिरूपकमित्यर्थः॥तथा च नृपाऽऽदिवर्णनप्रस्तावे नृपत्वादिनोपस्थितनलादीनां शक्यांशे भाने उपस्थितत्वान्नलाऽऽदिपदानामपि तदंशे भानमविरुद्धमिदमेतच्छक्यमित्याकारकाऽर्थशक्तिग्रह एव विशेषरूपेणोपस्थितेस्तन्त्रत्वादिति भावः ॥ तथैवबोधइति ॥ पदवाच्यत्वप्रकारक एवेत्यर्थः ॥ एवकारेण जात्यादिप्रकारकबोधव्यवच्छेदः॥ इदं च कश्चिदर्थोनलादिपदशक्योऽर्थत्वादित्यानुमानिकशक्तिग्रहाऽभिप्रायेण॥उक्तोपनीतपदशक्तिग्रहेत्वर्थविशेष्यकबोधाऽनुपपत्तिरेव शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमादित्यवधेयम् ॥ नैयायिकास्तु नलाऽऽदिपदानामपि विशिष्यशक्तिग्रहो नाऽनुपपन्नः यत्र नलत्वाऽऽदिसम्बन्धेन यत्किञ्चिद्धर्मवत्त्वधीस्तद्विषयीभूतनलत्वादेः शक्तिग्रहे धर्मिताऽवच्छेदकतया भाने बाधकाऽभावात् ॥ यद्वा यत्र प्रमेयत्वेन प्रमेयवानित्याकारा नलत्वादिविशिष्टबुद्धिः ततश्च प्रमेयत्वांशे सोपदशायां स्वरूपतो नलत्वादिप्रकारकनलविशेष्यकस्मरणे बोधकाऽभावात्तद्विषयनलत्वाऽऽदिना विशिष्य नलाऽऽदौ नलाऽऽदिपदशक्तिग्रहेण

शब्दोऽपि त्वप्रत्ययार्थइति प्रपञ्चितं भूषणे ॥५०॥

## इति वैयाकरणभूषणसारे त्वादिभावप्रत्ययार्थ विचारः ॥१॥

---

तत्तद्रूपेण नत्वाऽऽदिपदान्नत्वाऽऽदिबोधस्य सुलभत्वात् ॥ न च प्रमेयत्वांशे मोषकल्पने मानाभावः ॥ अनुभूयमानतत्तद्धर्मप्रकारकशाब्दबोधाऽनुपपत्तेरेव मानत्वात् कथमन्यथाऽनुभवाऽऽत्मकसमूहाऽऽलम्बनादेकपदार्थोबोधकाऽसम्भवेऽन्यपदार्थस्मृतिः शक्तिमत्त्वांशेऽपि पदविशेषणत्वस्य कल्पनापेक्षया तादृशस्मृतौ प्रमेयत्वांशे मोषकल्पनस्यैव न्याय्यत्वात् पदस्याऽर्थधर्मत्वाऽभावेन तस्य पदांशे विशेषणत्वाऽसम्भवाच्च तस्य पदस्य तस्मिन् पदे शक्तिरित्यर्थस्य लौकिकत्वेन पदप्रकारकबोधस्य सार्वत्रिकत्वाऽसम्भवाच्चेत्याहुः ॥५०॥

## इति भूषणसार दर्प्पणे भावप्रत्ययार्थनिरूपणम् ॥१॥

## ॥ अथ तद्धितार्थनिर्णयः ॥

---

सास्य देवतेत्यत्र देवताविशिष्टं देयं प्रत्ययार्थः ।

ननु देवताया इन्द्रादिपदाल्लाभेन तदन्तर्भावेण तद्धितशक्तिकल्पनमनर्थकमत आह ॥ देवतात्वोपस्थापकेति ॥ इन्द्रत्वेन रूपेण देवतोपस्थिता

ऐन्द्री वैश्वदेवी इत्यादौ इन्द्रादेर्देवतात्वोपस्थापका न्तराभावात् तेन रूपेणोपस्थितये शक्ति कल्पनावश्य कत्वात् । अतएव

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणमति ।
केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन् ।

वपि देवतात्वेन रूपेण तदुपस्थापकाभावादित्यर्थः ॥ तेनरूपेणेति ॥ देवतात्वेन रूपेणेन्द्रोपस्थितये इत्यर्थः ॥ अन्यथा तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः देवतासङ्गतिस्तच्च दुर्बलं च परं परमिति मीमांसकसिद्धान्ताऽसङ्गतिरिति भावः ॥ द्रव्यस्य देवतासम्बन्धित्वं च तदुद्देश्यकत्यागकर्मत्वं त्यागोद्देश्यत्वमपि वेदबोधिताऽबाधितद्रव्यस्वामित्वप्रकारेणेच्छाविषयत्वम् तदेव च देवतात्वम् नाऽतो घृताऽऽदिसम्प्रदानब्राह्मणस्य त्यागोद्देश्यत्वेऽपि देवतात्वं तस्य तत्स्वामित्वाऽबाधात् ऐन्द्री मन्त्र इत्यादौ मन्त्रस्य तद्देवताकत्वं च न तदुद्देश्यकत्यागकारणत्वम् विनाऽपि मन्त्रमिच्छाविशेषाऽऽत्मकत्यागोत्पत्त्याव्यभिचारात् ॥ किन्तु त्यागाङ्गोच्चारणकत्वम् ॥ एवं च देवतासम्बन्धी प्रत्ययार्थः ॥ ननु तद्देवताकत्वे ऐन्द्रं हविरिति सामानाधिकरण्याऽनुपपत्तेः स चाऽऽमिक्षादिपदसमभिव्याहारे तत्तद्द्रव्येण प्रतीयते देयं प्रत्ययार्थ इति तु तथाऽऽमिक्ष्यादिपदसमभिव्याहारे दानकर्मत्वेनाऽपि प्रतीतेरित्यभिप्रेत्योक्तमिति भावः ॥ उक्ताऽर्थे सम्मतिमाह ॥ अतएवेति ॥ देवतासम्बन्धिनः प्रत्ययार्थत्वादेवेत्यर्थः ॥ सान्निध्यादिति ॥ साऽऽमिक्षावैश्वदेवीत्यत्राऽऽमिक्षापदसमभिव्याहारादित्यर्थः ॥ विषयार्पणमिति ॥ आमिक्षात्मकद्रव्यस्यैव देवतोद्देश्यकत्यागकर्मत्वप्रतीतिरित्यर्थः ॥ केवलादिति ॥ सोमादिपदाऽसमभिव्याहृतात् ॥ अग्नेः समुच्चरन् ॥

नान्ययुक्तोऽग्निदैवत्यं प्रतिपादयितुं क्षमइति च मीमांसकैरप्युक्तमित्याशयेनाह ।

प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम्।
अभेदश्चात्र संसर्ग आग्नेयादावियं स्थितिः ।
देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥५१॥

(एकदेशे) देवतारूपे । तच्च विशेषणमभेदेनेत्याह अभेदश्चेति । ननु देवतायाः प्रत्ययार्थैकदेशत्वान्न प्रकृत्यर्थस्य तत्राभेदेनाप्यन्वय इत्याशयेनाह देवतायामिति। तथा च पदार्थैकदेशतैव नास्तीति भावः॥५१॥

नन्वग्न्यादिदेवस्य प्रकृत्यैव लाभान्न तत्र शक्तिः कल्प्या न च देवतात्वरूपेणोपस्थितये सा कल्प्यते प्रकृ

प्रत्ययत्वादग्निशब्दात्पुरः प्रादुर्भवन् ॥ आग्नेयोऽष्टाकपालो भवत्यमावस्यायामित्यादौ ॥ नान्येति ॥ सोमादिसाहित्याऽऽपन्नाऽपि देवतोद्देश्यकं द्रव्यं प्रतिपादयितुं नेष्टे किं तु तद्देवताकमेवेति तद्भावः ॥ तथा च देवताविशिष्टदेयस्य तद्धितार्थत्वं तेषामपि सम्मतमिति भावः ॥ प्रकृत्यर्थेति ॥ पदार्थः पदार्थेनाऽन्वेतीति व्युत्पत्तेरिति भावः॥अस्मिन् कल्पे च प्रकृत्यर्थस्याऽभेदसम्बन्धेन देवतारूपतद्धितार्थेऽन्वयः तस्य च स्वोद्देश्यकत्यागकर्मत्वसम्बन्धेन द्रव्यरूपतद्धिताऽपरपदार्थे इति बोध्यम्॥५१॥द्योतकत्वनयइति ॥ वाचकत्वनये प्रकर्षस्योपसर्गाऽर्थत्वेन तद्विशिष्टे धातौ लक्षणायाश्चकल्पनेन दृष्टान्तत्वाऽसम्भवादिति भावः ॥ प्रकृष्टजयवदिति ॥ प्रकृत्यंश-

तेर्लक्षणयैव तथोपस्थितिसम्भवात्। उपसर्गाणां द्योतकत्वनये प्रजयतीत्यत्र प्रकृष्टजप्रत्ययवदित्यभिप्रेत्याह।

प्रदेय एव वा शक्तिः प्रकृतेरत्वस्तु लक्षणा।
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥५२॥

नचैन्द्रं दधीत्यादौ द्रव्यस्य पदान्तराल्लाभात्कुतः पुनः प्रत्ययस्य तत्र शक्तिः कल्प्यत इति वाच्यम् पदान्तराश्रवणेऽपि तत्प्रतीतेः।ऐन्द्रं दधीति सामानाधिकरण्याच्च। अन्यथाऽऽख्यातस्यापि कर्त्तृकर्मवाचित्वं न स्यात् मीमांसकानां पुनः प्रत्ययस्य देवतात्वमेवार्थोऽस्तु। द्रव्यं पदान्तराल्लभ्यत एवेति आख्यातस्य कर्त्तृवद्वाच्यत्वं मास्त्विति कुतो न शक्यते वक्तुमिति

मात्रमादाय दृष्टान्तत्वं बोध्यम् ॥ लाभादिति ॥ समभिव्याहृतदध्यादिपदेन देवरूपसम्बन्धिभानादित्यर्थः ॥ कुतः पुनरिति ॥ अनन्यलभ्यो हि शब्दार्थ इति न्यायात् किन्तु सम्बन्ध्यर्थकत्वमेवोचितमिति भावः ॥ तत्प्रतीतेरिति ॥ देवतासम्बन्धिप्रतीतेरित्यर्थः ॥ तथा च त्वदनुपपत्त्या तद्धितस्य तदर्थकत्वमावश्यकमिति भावः॥पदान्तराऽश्रवणे सम्बन्धिप्रतीतेरप्यर्थनिर्णयत्वादाह ॥ ऐन्द्रन्दधीति सम्बन्धमात्राऽर्थकत्वे सामानाधिकरण्याऽनुपपत्तिरित्यर्थः ॥ अन्यथेति ॥ उक्ताऽनुपपत्तेस्तदसाधकत्वे इत्यर्थः ॥ पचति देवदत्तः पच्यते तण्डुल इत्यत्र सामानाधिकरण्यानुपपत्तिर्हि कर्त्रादि

दिक्। देवतायां देवतात्वरूपेण निरूढेति अनुपपत्ति

वाचित्वसार्विकेति भावः॥ वैयाकरणान् प्रतीयमापत्तिः ॥ मीमांसकान् कटाक्षोक्तत्याऽऽह ॥ मीमांसकानामिति ॥ तन्मते तत्तद्देवताकत्वरूपप्रत्ययार्थेन धर्मिण आक्षेपालाभेन सामानाधिकरण्योपपत्तेरिति भावः॥ पदान्तरादित्याक्षेपस्याऽप्युपलक्षणम्॥ वाच्यमाह्वि ति ॥ आख्यातस्य कर्त्तेव तद्धितस्य द्रव्यं वाच्यं मास्त्वित्यर्थः॥ इष्टापत्तावाभिद्धां देवतायुक्तामिति त्वित्सद्धान्तभङ्ग इति भावः॥ ननु तेषां कर्तुरनन्यलभ्यत्वान्न प्रत्ययाऽवाच्यत्वम् किं तु प्राधान्याऽऽपत्तेरेव तत्त्वमत आह ॥ दिगिति ॥ तदर्थस्तु प्रकृतिप्रत्ययाऽर्थयोरिति न्यायस्य सङ्कराऽऽदौ व्यभिचारेण तेन प्राधान्याऽऽपत्त्यभावात्॥ भावप्रधानमाख्यातमिति निरुक्तात्तस्याऽऽख्याताऽर्थाऽतिरिक्तप्रत्ययाऽर्थविषयकत्वोपगमाच्चेति॥ अत्रेदं बोध्यम्॥तद्धितस्य देवताऽघटिताऽर्थकत्वे तद्धितेन चतुर्थी वेतिन्यायस्य सर्वसिद्धस्याऽनुपपत्तिः॥ न च तद्धितस्य तदर्थकत्वेऽपि कथं तदपेक्षया चतुर्थ्या जघन्यत्वं त्यागोद्देश्यकरूपदेवताबोधकत्वस्योभयत्राऽविशिष्टत्वादिति वाच्यम्॥ नहि देवतासम्बन्धिदेयमात्रं तद्धितार्थः किं तु वेदबोध्यदेवतात्वघटितः॥ एवं च तद्धिताऽर्थेन यागस्य देवतात्वांऽशे वेदबोध्यत्वाऽवगाहित्वेन तदंशे अप्रामाण्यशङ्काया अनुदयात्तदिति विनियोजकतया बलवत्त्वं चतुर्थ्या तु तदंशे वेदबोध्यत्वाऽनवगाहिबोधस्यैव जननेन तत्र प्रामाण्यशङ्कानिरासार्थमुपायाऽन्तरस्याऽपेक्षणाज्जघन्यत्वं यथा तद्धितेन देवतात्वेन रूपेण देवताबोधे साऽस्यदेवतेति स्मरणमस्ति चतुर्थ्यास्तु देवतात्वेन स्मरणम् चतुर्थीसम्प्रदानइति सम्प्रदान एव तत्स्मरणात् सम्प्रदानत्वं च त्यज्यमानद्रव्योद्देश्यकत्वे सति प्रतिग्रहीतृत्वम्॥ एवं च ततः सम्प्रदानत्वघटकतया देवतात्वप्रतीतावपि तद्धितादिव मुख्यतया देवतात्वाऽनधिगमात्तस्मात्तद्धिताऽपेक्षया जघन्यत्वम्॥ एवं मन्त्रवर्णादधिष्ठानप्रतीतावपि देवतात्वस्य

ज्ञानापूर्वकत्वमनादिप्रयोगावच्छिन्नत्वं वा तत्त्वमिति भावः ॥५२॥

अनयैव रीत्यान्यत्राप्यवधेयमित्याह ।

क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ।
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥५३॥

"तदस्यां प्रहरणमिति क्रीडायां णः" इत्यत्र प्रहरणविशिष्टा क्रीडा प्रहरणक्रीडेति क्रीडामात्रं वार्थः। आ-

साक्षादप्रतीतेर्मन्त्रवर्णस्य चतुर्थ्यपेक्षया जघन्यत्वं बोध्यं तद्धितस्य देवतार्थकत्वाऽनभ्युपगमे तु तदसङ्गतिः स्पष्टैवेति ॥ नन्विन्द्राऽऽदिपदाच्छक्त्यैव देवतालाभे तत्र लक्षणाऽभ्युपगमो व्यर्थोऽत आह ॥ देवतात्वेनरूपेणेति॥ तथा च शक्यादन्येन रूपेण ज्ञाते भवति लक्षणेति तद्बोध्ये देवताया इन्द्रस्वरूपायाः शक्यत्वेपीन्द्राऽभिन्नदेवतात्वेन तज्ज्ञानाऽर्थं सोचितैवेति भावः॥ अनुपपत्तिज्ञानपूर्विकायामपि तीरनिष्ठगङ्गापदलक्षणायां निरूढत्वव्यवहारादाह॥अनादीति॥एतत्तत्त्वमभिहितं प्राक्॥५२॥एकदेशाऽन्वयप्रसङ्गमाह ॥ प्रहरणक्रीडेति ॥ व्युत्पत्तिवैचित्र्यादेकपदोपस्थितयोरपि तयोः परस्परमन्वय इति भावः ॥ प्रहरणस्याऽपि प्रकृत्यैव लाभमभिप्रेत्याऽऽह॥ क्रीडामात्रस्वेति ॥ क्रीडारूपसम्बन्धी वेत्यर्थः ॥ मात्रपदेन तत्प्रहरणस्य तद्धितार्थत्वव्यवच्छेदः ॥ तथा च दण्डाऽभिन्नप्रहारसाधनविशिष्टा क्रीडेति बोधः ॥ सास्येति ॥ तत्तत्सूत्रविहितप्रत्ययस्य निवासः सम्बन्धो वाऽर्थः अत्र निवासशब्दोऽधिकरणघजन्तः निशब्देन च वासे नैरन्तर्यरूपाऽतिशयः प्रत्याय्यते ॥ स च प्रकरणादिना तत्तत्कालघटितो ग्राह्यः ॥ तथा च

दिना "सोऽस्य निवासः" "साऽस्मिन् पौर्णमासीति" "तदस्यास्त्यस्मिन् इति मतुप्" इत्यादिकं सङ्गृह्यते । वृत्तिमात्रेऽतिरिक्तशक्तेः "समर्थः पदविधिः"

स्रुघ्नाऽभिन्नवासाऽधिकरणसम्बन्धीति बोधः निवासस्य प्रत्यासत्त्या प्रत्ययाऽर्थसम्बन्धिकर्तृक एव ॥ अत एव कादाचित्कस्रुघ्नवासकर्तरि न तथा प्रयोगः ॥ साऽस्मिन्निति ॥ सूत्रविहिततद्धितस्य तु पौर्णमासीघटितत्वाऽवच्छिन्नोऽर्थः नक्षत्रयुक्तकालविहिताऽणाद्यन्तपौषादिशब्दानां पुष्याऽभिन्ननक्षत्रकर्मकशशिभोगाऽऽश्रयकालाऽभिन्नपौर्णमासीघटितो मास इत्यादि बोधः पौषाऽऽदिपदं च न केवलयौगिकम् पौषः पक्ष इति व्यवहारात् किंतु रूढमपि एतद्बोधनायैव सूत्रे संज्ञाग्रहणं रूढिनिरूपकताऽवच्छेदकं च त्रिंशत्तिथिसमुदायत्वरूपमासत्वमात्रं यत्किञ्चित्तिथ्यवधिकत्रिंशत्तिथिसमुदाये मासाऽऽदिव्यवहारेऽपि चान्द्रसौरपौषाऽऽदिबहिर्भूतपौषाऽऽदिघटितत्रिंशत्तिथ्यन्तर्गततिथिषु पौषादिव्यवहारविरहात्किं तु शुक्लप्रतिपदादिदर्शाऽन्ततिथिसमुदायत्वमतो नोक्तदोष इत्याद्यन्यत्र विस्तरः ॥ तदस्यास्त्यस्मिन्निति सूत्रेण प्रथमान्तादस्त्यर्थोपाधिकात्सम्बन्धिकरणे च मत्वर्थीयो विधीयते यद्यप्यस्त्युक्तेः षष्ठ्यर्थसम्बन्ध एव मतुबादिविधानमाभाति तथापि गोमांश्चैत्र इति सामानाधिकरण्याऽनुरोधात्सम्बन्धिवाचकतैवेत्युक्तम् प्राक् ॥ एवं च गोमानित्यादौ गोनिरूपितस्वामित्वसम्बन्धवानित्याद्यन्वयबोधः ॥ न च भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादय इति सम्बन्धसमकक्षतया भूमाद्यर्थानामप्युपादानात्तेषामपि मतुबादिशक्यत्वमिति वाच्यम् ॥ स्यादेवं यदि तेष्वर्थेषु मतुबादीनां विधायकं सूत्रादिकमुपलभ्येत किन्तु प्रयोगोपाधित्वमेव तेषां अस्त्यर्थवत् गवादिपदानां बहुत्वाऽऽदिविशिष्टलाक्षणिकतयैव भूमाऽऽदिप्रतीतिसम्भवाच्च ॥ अन्ये त्वस्तिशब्दान्मतुबर्थे तद्धितमि-

रिति सूत्राद्भाष्यादुक्तो विचारः शास्त्रान्तरीयैः सह तद्री त्यैवोक्तः। आरोपितप्रकृतिप्रत्ययार्थमादाय वा । व-

त्याहुरित्यत्र विस्तरः ॥ इत्यादिकमित्यादिपदात्तस्यापत्यं तेन रक्तं रागा- त्संस्कृतं भक्ष्या इत्यादिसङ्ग्रहः ॥ तत्र गार्गिरित्यादौ तद्धितार्थोऽपत्यस्य प्र- त्ययपुरुषरूपस्यैकदेशे जन्यते प्रकृत्यर्थगर्गादेर्निरूपकतया प्रत्ययार्थगर्गनिरू- पितजन्यताऽऽश्रयः पुमानित्यादिबोधः गार्ग्यं इत्यादौ तु जन्यपुरुषजनक पुरुषाद्यात्मकगोत्राऽपत्यार्थैकदेशे जन्यत्वे प्रकृत्यर्थोऽन्वयः गार्ग्यायण इ- त्यादौ तद्धितार्थयुवापत्यैकदेशे गोत्रप्रत्ययान्तार्थस्य निरूपकतयाऽन्वयः परन्तु जीवति तु वंश्ये युवेतिपरिभाषणाद्गर्गजीवनसमानकालिकत्वमपि प्रधानप्रत्ययार्थे विशेषणं तस्याऽपि प्रत्ययशक्यत्वात्॥ एवं च गर्गजीवनस- मानकालिको गर्गगोत्राऽपत्यनिरूपितजन्यतावानयं पुमानिति बोधः ॥ तेन रक्तमिति विहितप्रत्ययस्य तत्सम्बन्धाऽऽधीनतदीयरूपाऽऽरोपविषयो ऽर्थः ॥ तादृशाऽऽरोपविषयत्वमेव तेन रक्तत्वम् ॥ शङ्खः पीत इत्यारोपमा- दाय शङ्खादेरारोप्य पीतिमाऽऽश्रयहरितालाऽऽदिना रक्तत्ववारणायाऽधी नान्तमारोपविशेषणम् माञ्जिष्ठपटादेश्चक्षुरादिना रक्तत्ववारणाय तदीय त्वं रूपविशेषणम् ॥ अत्र च रागकरणस्य मञ्जिष्ठाऽऽदेः प्रकृत्यर्थस्य तद्धि- तार्थस्यैकदेशसम्बन्धे प्रतियोगितया रूपे चाऽऽधेयतयाऽन्वयः ॥ तथा च मञ्जिष्ठासम्बन्धाऽधीनो यो मञ्जिष्ठानिष्ठरूपाऽऽरोपस्तद्विषयताऽऽश्रय इति माञ्जिष्ठ इत्यतो बोधः ॥ शूल्यमुख्यमित्यादौ संस्कृतं भक्षा इति सूत्रवि हिततद्धितार्थैकदेशे पाकाऽऽदिसंस्कारे शूलोखाऽऽदेः प्रकृत्यर्थस्याऽधिकर णत्वेनाऽन्वयः ॥ अनयैव रीत्या तद्धिताऽन्तराद्बोध ऊहनीयः ॥ तद्धितानां क्वचित्प्रकृत्यर्थे स्वार्थैकदेशस्य क्वचित्स्वार्थस्यैवाऽन्वयबोधकत्वादिति जहत् स्वार्थवृत्तिपक्षमवलम्ब्य मूलमवतारयति ॥ वृत्तिमात्र इति॥ तथा च तत्पदे पदानामानर्थक्यात्तदर्थनिरूपणे सिद्धान्तप्रच्युतिरिति भावः॥तद्रीत्यै वेति॥

स्तुनो विशिष्टशक्त्यैवार्थोपस्थितिरित्याह वस्तुत इति ॥ ५३ ॥

## इति वैयाकरणभूषणसारे देवताप्रत्ययार्थनिर्णयः ॥ १० ॥

शाब्दान्तरीयरीत्यैवेत्यर्थः ॥ ननु वैयाकरणमते जहत्स्वार्थवृत्त्याश्रयणे न पूजनात्तेनरक्तं रागादित्यादिसूत्राणां का गतिरत आह ॥ आरोपितेति ॥ विशिष्टशक्त्यैवेति ॥ विशिष्टाऽर्थस्येति शेषः ॥ वृत्तौ पक्षद्वयाऽभ्युपगमेन जहत्स्वार्थपक्षे तद्घटकपदाऽर्थनिरूपणस्याऽनुपयोगेऽप्यजहत्स्वार्थपक्षे विशिष्टशक्तिग्रहस्य प्रत्येकशक्तिनिरूपणोपजीवकतया तन्निरूपणस्यौचित्यमेवेति तत्सूचनायैव मूलेऽतीवेत्युपात्तमिति रहस्यम् ॥

## इति भूषणसारदर्पणे देवताप्रत्ययार्थनिरूपणम् ॥ १० ॥

## ॥ अथाऽभेदैकत्वसङ्ख्यानिर्णयः ॥

वृत्तिप्रसङ्गात्तत्राभेदैकत्वसङ्ख्या प्रतीयतइति सिद्धान्तं दृष्टान्तेनोपपादयति ।

अभेदैकत्वसङ्ख्याया वृत्तौ भानमिति स्थितिः ।
कपिञ्जलालम्भवाक्येत्रित्वं न्यायाद्यथोच्यते ॥५४॥

सङ्ख्याविशेषाणामविभागेन सत्त्वम् अभेदैकत्वसङ्ख्या । उक्तञ्च वाक्यपदीये ।

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।

ननु प्रक्रान्ते प्रातिपदिकघटकप्रत्ययाऽर्थनिरूपणेऽभेदैकत्वसङ्ख्यानिरूपणमसङ्गतमत आह ॥ वृत्तिप्रसङ्गादिति ॥ तथा च वृत्तिनिरूपणे क्रियमाणे स्मृतिर्यथाप्राप्ततद्धर्मोपेक्षाऽनुचितेति प्रसङ्गसङ्गतिसत्त्वान्नोक्तदोष इति भावः ॥ यद्यपि वक्ष्यमाणन्यायान्तेऽपि वाह्वृत्तिसत्त्वात्तदनन्तरमेव सङ्ख्यानिरूपयितुमुचिता तथापि तत्प्रकृत्यर्थे सङ्ख्याया अभानादाकाङ्क्षाविच्छेदः स्यादित्यत्रैव तन्निरूपितमिति बोध्यम्॥ अभेदैकत्वसङ्ख्यापदाऽर्थं मतभेदेन द्विधा निर्वक्ति ॥ सङ्ख्याविशेषाणामिति ॥ एकत्वत्वाऽऽद्यवच्छिन्नानामित्यर्थः; ॥ अभेदेन ॥ अविरोधिनेति यावत् ॥ उक्ताऽर्थे हरिवाक्यं प्रमाणयति ॥ उक्तञ्चेति ॥ आहितशक्तयः; ॥ आहिता समर्पिता तत्तद्दोषविभेदनिबन्धन

अविभागेन वर्त्तन्ते सङ्ख्यां तां तादृशीं विदुरिति।

परित्यक्तविशेषं वा सङ्ख्यासामान्यं तत्। उक्तञ्च

भेदानां वा परित्यागात्सङ्ख्यात्मा स तथाविधः।

व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते।

अगृहीतविशेषेण यथा रूपेण रूपवान्।

विरोधरूपा शक्तिर्यैरित्यर्थः॥ व्यक्तविरोधा इति यावत्॥ अत एव अविभागेन अविरोधेनेत्यर्थः; तां अभेदैकत्वसङ्ख्यां तादृशीं मधुनिष्ठरसस्थितितुल्यामित्यर्थः;॥ नन्वेकत्वद्वित्वादीनामेकत्र सत्त्वमनुपपन्नं नहि द्वावेकत्वेन व्यवह्रियेते नाऽप्येको द्वाविति न हि द्विपुत्र इति भाष्यात्॥ किञ्च दृष्टान्तोऽपि न समंजसः तत्तद्रसवदारब्धेऽवयविनि माक्षिकेऽवयवसजातीयरसान्तरस्यैवोत्पादाऽभ्युपगमादत आह॥ परित्यक्तेति॥ वाशब्दः पक्षान्तरे अगृहीतविशेषधर्मकं सङ्ख्यामात्रमित्यर्थः;पूर्वकल्पे उक्ताऽस्वरसाभिसन्धिकं वा व्यपदीयम् तत्पक्षेऽपि प्रमाणत्वेनोपन्यस्यति॥ भेदानामिति॥ भेदानामेकत्वद्वित्वाऽऽदिविशेषणधर्माणां परित्यागादग्रहात् इदं च व्यापारपदार्थेऽभेदेनाऽन्वयि॥ सङ्ख्यात्मा॥ सङ्ख्यास्वरूपः॥सः॥ एकत्वादिः॥तथाविधः॥ अभेदैकत्वव्यपदेश्य इत्यर्थः॥ तदेव विशदयति॥ जातिभागस्येति॥ एकत्वत्वादेरित्यर्थः॥ भेदापोहेनेति॥ भेदस्य विशेषणस्य योऽपोहोऽग्रहस्तेनेत्यर्थः;॥ यद्वा भेदापोहेनेत्यस्य व्यापारादित्यनेनाऽन्वयः प्रकृत्यादित्वात् तृतीया तथाचैकत्वत्वाऽऽदेर्जातिविशेषस्य भेदाऽग्रहरूपो यो व्यापारो विशेषणाऽऽत्मा ततो वर्त्तत इत्यर्थः;॥ भेदाऽपोहो न वर्त्तत इति वा पाठे तु भेदरूपो योऽपोहोऽतद्व्यावृत्तत्वं स न वर्त्तते न सत इत्यर्थोऽवसेयः पक्षान्तरावलोकनेनैतत्पाठस्यैव हरिसम्मतत्वमध्यवसीयते द्वित्वाद्यग्रहकालिकसङ्ख्यात्वप्रकारकप्रतीतिगोचरः सङ्ख्यापदार्थोऽभेदैकत्वपदव्यपदेश्यो भवती

प्रख्यायते न शुक्लादि भेदापोहस्तु गम्यते इति ।
अस्याः वृत्तौ समासादौ भानं न्यायसिद्धमिति शेषः ।
इति मतस्थितिर्वैयाकरणानाम्।अयं भावः। राजपुरुष
इत्यादौ राज्ञोराज्ञोः राज्ञां वायं पुरुषइतिजिज्ञासा जा
यते।विशेषजिज्ञासाच्च सामान्यज्ञानपूर्विकेति सामा
न्यरूपेणतत्प्रतीतिः शब्दादावश्यकी।अतस्तस्यां शक्ति

तिसमुदितार्थः ॥ तत्र दृष्टान्तमाह ॥ अगृहीतविशेषेणेति॥ शुक्लत्वाऽऽदिप्र-
कारकग्रहासमानकालिकरूपत्वप्रकारकप्रतीतिविषयेण शुक्लादिनैव यथा
घटादिरूपवानिति प्रतीयते शुक्लादेर्यो भेदरूपोऽपोहः शुक्लत्वादिरतद्व्या
वृत्तिरूपः स तु न प्रतीयते तद्वद्राजपुरुष इत्यादौ राजाऽऽदिपदार्थः स-
ङ्ख्यावानिति प्रतीयते न तत्र सङ्ख्यांश एकत्ववादिनां मत इत्यर्थः ॥ तादृश
सङ्ख्याभानस्य पराऽनभ्युपेतत्वात्कथमियं स्थितिरन्तराशेषपूरणेन व्याचष्टे॥
वैयाकरणानामिति ॥ ननु तादृशसङ्ख्याया वृत्तौ भाने किं प्रमाणमत आ-
ह ॥ अयम्भावइति ॥ सामान्यज्ञानपूर्विकेति ॥ तद्धेतुकेत्यर्थः ॥ आवश्यकी-
ति ॥ तां विनोक्तजिज्ञासाया अभावादिति भावः ॥ सा च सङ्ख्यापूर्वोत्तर
पदार्थयोः सम्बन्धवद्वृत्तिशक्यैव अजहत्स्वार्थवृत्तिपक्षे पूर्वपदस्य सङ्ख्या-
विशेषवाचकत्वे गमकाभावे तेन द्विपुत्रो मौद्गिको मासजातस्त्रावकीनो
भ वह्निरामवसरित्यादौ वृत्तावभेदैकत्वसङ्ख्याया अभानेपि न क्षतिः॥ आद्ये
सङ्ख्याविशेषस्यैव पूर्वपदार्थत्वात्॥ द्वितीय एकमुद्रस्य क्रयकरणाऽद्व्यत्रा
ङ्गुत्वाऽवगतिः॥तृतीये विशिष्टकालाऽवगमाय मासपदयोग्यसङ्ख्याध्यवसा-
यः॥चतुर्थे तवकाद्यादेकत्वाऽवगतिः॥पञ्चमे प्रकरणाद्वित्वाऽवगतिः॥एवं का-
रकमध्य इत्यादावप्यूह्यमिकस्य मध्याऽसम्भवात् सति प्रकरणे राजपुरुष इ-
त्यादावपि सङ्ख्याविशेषप्रकारेणैव भानं तदा तत्राऽपि न तस्य वृत्त्यर्थत्व

रिति। तस्याएकत्वेन प्रतीतौ न्यायमाह कपिञ्जलेति। ब हुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानवदेकत्वस्य, सर्व्वतः प्रथमोपस्थितत्वमस्तीति

मिति भेदो भेदे सङ्गिताद्वित्वाऽऽदिसङ्ख्या तदभावसहितमेकत्वमेदैकत्वमि ति व्युत्पत्त्या सङ्ख्यात्वे नैकत्वमेवोपसर्जनपदाऽर्थे भासते तथैकवचनमुत्सर्ग तः करिष्यत इति वचनाद्राजन् अस्पुरुषसुइत्यलौकिकविग्रहे एकवचनं प्रयुज्यते यत्र तु प्रकरणाऽऽदिना सङ्ख्याविशेषभानं तत्र बहुवचनमपि यथा चित्रगुरित्यादौ चित्राअस्गोअसित्यभिप्रेत्योत्तरग्रन्थमवतारयति ॥ तस्या- इति ॥ वृत्तिघटकपदाऽर्थोपसर्जनव्यक्तेरित्यर्थः ॥ प्रतीताविति ॥ सङ्ख्या- त्वाऽवच्छिन्नैकत्वप्रकारतानिरूपितविशेष्यत्वेन बोध इत्यर्थः ॥ उपसर्जन पदाऽर्थे सङ्ख्यात्वेनैकत्वमेव प्रतीयते न द्वित्वाऽऽदीत्यत्र दृष्टान्तमाहेति यावत् ॥ गणनायामिति ॥ बहुत्वविशिष्टानेकसङ्ख्याने इत्यर्थः ॥ कपिञ्ज लानालभेतेति वाक्ये न बहुत्वव्याप्यसङ्ख्याविशिष्टकपिञ्जलाऽऽलम्भनं वि- धीयते तत्र त्रयाणां चतुरादीनां वाऽऽलम्भनमिति संशये बहुत्वव्याप्यस्य त्रित्वादिषु सर्वेष्वविशिष्टत्वाद्यथाप्राप्तमेवालब्धव्यमिति पूर्वपक्षे चतुरादी नामालम्भनं माहिंस्यादिति सामान्यशास्त्रेऽविहितनिषेधस्यालभ्यतावद् व्यक्तीतरपरत्वरूपतात्पर्यसङ्कोचकल्पने गौरवाद्गणनायां प्रथमोपस्थितत्रि त्वपरतयाऽपि वचनस्य चारितार्थ्याल्लाघवाच्च बहुत्वेन त्रित्वमेव बहुवच- नाऽर्थ इति सिद्धान्तितं तन्न्यायादत्राऽपि सङ्ख्यात्वेनैकत्वस्यैव वृत्त्यर्थत्वं न तु द्वित्वादीनामप्रतीयमानविशेषधर्मकैकत्वमभेदैकत्वमिति व्युत्पत्तेरि ति भावः ॥ निजान्वयाणामित्यादिनिर्देशैरस्मिन् व्याकरणे व्याप्तिन्याय स्यैवाऽऽश्रयणेन प्रकृते सङ्ख्यात्वनैकत्वप्रतीतिर्हि सूपपादेत्यपि केचित् ॥ ननु जिज्ञासायां शाब्दमेव सामान्यधर्मप्रकारकज्ञानदर्शनमपेक्षितमिति न नियमः आत्मफलदर्शनेनाऽपि तद्रसास्वादनेच्छायां तदपेक्षाविरहात्॥

भावः । वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा । तथात्वे

नचैवं सामान्यधर्मप्रकारकज्ञानस्यैव हेतुत्वं विलीयेतेति वाच्यम् ॥ भाव्य दर्शनस्योद्बोधकतया तद्रसस्मरणेन तदुपपत्तेः॥ प्रकृते तस्या अग्राह्यत्वेऽपि तदव्यभिचरितद्रव्यत्वेनाऽनुमानिकतद्बोधसम्भवात् तादृशजिज्ञासाया अननुभवाच्च नोक्तयुक्तिः वृत्तेर्भेदैकत्वसङ्ख्याऽर्थत्वसाधिकेत्यभिप्रेत्याह ॥ वस्तुतइति ॥ अनुभवसिद्धेति ॥ अस्य येन तदनुरोधेन सामान्यधर्मप्रकारक ज्ञानस्याऽऽवश्यकतास्यादिति शेषः; ' अभेदैकत्वसङ्ख्याया वृत्तौ भानमिति मूलं तु प्राचीनग्रन्थाऽनुवाद एवेति भावः॥ अनुभवाऽसिद्धत्वस्य शब्दनिर्णेय यत्वं मत्वाऽऽह ॥ तथात्वेचेति ॥ अनुभवसिद्धत्वे चेत्यर्थः ॥ समानप्रकारकत्वेनैवेति ॥ एवकारेण विभिन्नप्रकारकत्वव्यवच्छेदः तद्धर्मप्रकारकेच्छां प्रति तद्धर्मप्रकारकत्वज्ञानस्य हेतुतायाः सुखादीच्छास्थले क्लृप्तत्वात्प्रकृते विशेषधर्मप्रकारकजिज्ञासायाः साऽवयवविषयत्वेन ज्ञानप्रकारीभूतविशेष धर्मप्रकारकत्वस्याऽऽवश्यकत्वेन तत्पदाऽर्थविशेषधर्मप्रकारकज्ञानकार्यताऽवच्छेदकाऽऽक्रान्तत्वादिति भावः ॥ तत्तद्रूपेणेति ॥ एकत्वत्वाऽऽदिरूपेणैवेत्यर्थः॥ एवकारेण सङ्ख्यासामान्यधर्मव्यवच्छेदः इष्टापत्तिस्तु न तथासति शब्दादेव विशेषधर्माऽवगतौ जिज्ञासाया असम्भवादिति भावः ॥ अन्यवदन्ति ॥ तद्धर्मप्रकारकज्ञानस्य कार्यताऽवच्छेदककोटौ स्वातन्त्र्येण तद्धर्मप्रकारकत्वम् सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वाऽनुरोधान्निवेशनीयम् ॥ अन्यथा सामान्यधर्मप्रकारकज्ञानस्योक्तजिज्ञासां प्रति हेतुत्वं विलीयेत॥न च तत्र मानाऽभावः जायते च कार्य्यं कारणे वा ज्ञाते किमस्य कार्यं कारणं वेति दीधितिवाक्यस्यैव मानत्वात्॥ प्रकृते विशेषधर्मस्य पारतन्त्र्येणैवेच्छांशे प्रकारत्वात्तद्धर्मप्रकारकज्ञानं विनाऽपि सामान्यधर्मप्रकारकज्ञानात्तादृशजिज्ञासायाः सूपपादत्वात्॥ सामान्यधर्मप्रकारकज्ञानं तु विशेषधर्मप्रकारत्वाऽवच्छिन्नविशेष्यकेच्छात्वमिति न गुणं

च ज्ञानेच्छयाःसमानप्रकारकत्वेन हेतुहेतुमद्भावोत्त त्तद्रूपेणैव वाच्यता स्यादिति ध्येयम् ॥५४॥

## इति वैयाकरणभूषणसारे अभेदैकत्वसङ्ख्यानिरूपणम्

॥ ११ ॥

त्वसामान्यज्ञानात् सुखाऽऽदीच्छाप्रसक्तिरधिकमन्यत्राऽनुसन्धेयम् ॥ तथा-चाऽत्र जिज्ञासायाः सर्वसिद्धत्वे तदुपपत्तयेऽभेदैकत्वे इत्ते वृत्तिरावश्यिका॥ एवं चाऽभेदैकत्वसङ्ख्याया इत्ताविति मूलस्य सङ्गतिः ॥ एतेन भेदस्य तत्त्व इचरितद्वित्वादेरेकत्वस्य च या प्रतीतिस्तदभाव इत्यर्थपरतया व्याख्यानं परास्तमिति ॥५४॥

## इति भूषणसारदर्पणे अभेदैकत्वसङ्ख्यानिरूपणम्

॥ ११ ॥

## ॥ अथ सङ्ख्याविवक्षानिर्णयः ॥

सङ्ख्याप्रसङ्गादुद्देश्यविधेययोः सङ्ख्याविवक्षाविवक्षे निरूपयति ।

सङ्ख्याविवक्षाऽविवक्षानिरूपणे सङ्गतिं दर्शयति ॥ प्रसङ्गादिति ॥ अभे दैकत्वसङ्ख्यानिरूपणे कपिञ्जलानालभेतेत्यत्र विधेयविशेषणतया नित्यस-

लक्ष्यानुरोधात्सङ्ख्यायास्तन्त्राऽतन्त्रे मते यतः।
पश्वेकत्वादिहेतूनामाश्रयणमनाकरम् ॥५५॥

गृहं संमार्ष्टीत्यत्रोद्देश्यगृहगतमेकत्वमविवक्षितमिति वक्तृणास्माकमुद्देश्यविशेषणाविवक्षानियमः धातोरित्येकत्वस्य विवक्षितत्वात्।

उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि।
तदा सर्वैर्विशिष्येत द्वन्द्वोत्पन्नसुवर्थवदिति।

शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च। आर्द्धधातुकस्येड्वलादेरित्यत्रानुवाद्यार्द्धधातुकविशेषणस्य वलादित्वस्य विवक्षितत्वाच्च। एवं पशुना यजेत इति

ङ्ख्याविवक्षायाः स्मृतत्वादुपेक्षाऽनर्हत्वाच्चेत्यर्थः॥ अविवक्षितमितीति॥ त द्विवक्षणे यज्ञियपात्राणां मार्जनाऽलाभ इति भावः॥ धातोरितीति॥ प्रत्ययविधौ धातोरितिसूत्रस्थधातुपदाऽर्थविशेषणीभूतैकत्वादेस्तच्छास्त्रे विवक्षणादित्यर्थः॥ अस्मच्छास्त्रे तु उद्देश्यगतविशेषणस्याऽविवक्षा मीमांसकानामपि सम्मतेत्याह॥ उत्पद्येतेति॥ तदा स प्रत्ययार्थः सर्वैर्धात्वर्थैर्विशिष्येतेत्यर्थः॥ ननु नेयं युक्तिर्विवक्षासाधिका तादृशसमुदायस्य क्रियावाचकत्वाऽभावेन ततः प्रत्ययोत्पत्तेर्गगनकुसुमायमानत्वेन स्वत एव विवक्षासत्त्वादत आह॥ आर्द्धधातुकस्येड्वलादेरितीति॥ विवक्षितत्वाच्चेति॥ अन्यथा तदुपादानवैयर्थ्यापत्तेरिति भावः॥ एवमिति॥ अनुवाद्यविशेषणमविवक्षितमेव नियमाऽनाश्रयणवदित्यर्थः॥ पशुना यजेतेत्यत्र यज्यर्थयागस्य करणाऽऽकाङ्क्षायां साधनत्वेन पशुर्विधीयते॥ एवं च पशुशब्दस्य द्वितीयस्य

वत् विधेयविशेषणं विवक्षितम् इत्यपि नियमो न "रदाभ्यां निष्ठातोनः पूर्व्वस्य च दः" इत्यत्र नकारद्वयविधानाद्यनापत्तेः। तथा च भिन्नइत्यत्र नकारद्वयलाभो न स्यात्। "आद्गुण" इत्यादावेकत्वविवक्षयैवोपपत्तौ एकः पूर्व्वपरयोरित्येकग्रहणवैयर्थ्यापत्तेश्चेति भावः। शब्दार्थस्तु सङ्ख्याया लक्ष्यानुरोधात्तन्त्रातन्त्रे यतोमते अतः पश्वेकत्वाधिकरणोक्तहेतूनामाश्रयणं नास्माकं

सर्पकतया तदुपस्थितानां केषाञ्चिद्ग्रहणे केषाञ्चित्परित्यागे मानाऽभावे न पशुत्वपुंस्त्वादिवदेकत्वमपि यागसाधनत्वेन विवक्षितं तेन नाऽनेकपशुकरणतया तददृष्टसिद्धिरेव मन्यनाऽपिविधेयविशेषणं विवक्षितमत्र विवक्षाकारणविरहादिति मीमांसकपरिशीलिना सरणिस्तदनुसरणनियमो नाऽस्माकमित्यर्थः॥ एतच्छास्त्रे तदाश्रयणेऽनिष्टं प्रदर्शयति॥ रदाभ्यामिति॥ विधानानापत्तेरिति॥ न इत्येकवचनोपस्थितैकत्वस्याऽपि विधेयविशेषणतया तद्विवक्षायां नकारद्वयविधानं न स्यादित्यर्थः॥ ननु माऽस्तु न द्वयविधानमत आह॥ तथाचेति॥ इदं चैकवाक्यतया विधानमभिप्रेत्य वाक्यभेदेन विधानपक्षेत्वाह॥ आद्गुणइत्यादाविति॥ एकत्वविवक्षयैवेति॥ विधेयगुणगतैकत्वविवक्षयैवेत्यर्थः॥ तथा चैकग्रहणमेतोक्ताऽर्थे ज्ञापकमिति भावः॥ ननु पश्वेकत्वाऽऽदिविवक्षा हेतूनां जैमिनिसम्मतत्वान्न तदाऽऽश्रयणस्याऽऽनाकरत्वमित्याशङ्कामपाकरिष्यन् योजनाप्रदर्शनमिषेणाऽऽकरपदार्थं व्याचष्टे॥ शब्दार्थस्त्वित्यादि॥ पश्वेकत्वाऽधिकरणोक्तहेतूनामिति॥ पशुना यजेतेत्यत्र विधेयगतैकत्वस्याऽविवक्षणे पशुत्वाक्रमप्रयोगपशुभाववाधेन यागवैगुण्याऽऽपत्तिः॥ गुणाऽनुरोधेन या

द्धान्तसिद्धमिति । आदिना गृहैकत्वसङ्ग्रहः ॥५५॥

ननु विधेयविशेषणविवक्षा आवश्यकी । अन्यथा सुद्ध्युपास्यइत्यादावनन्तयकाराद्यापत्तेः। भिन्नइत्यत्रनकारद्वयवदन्येषामप्यापत्तेः । एकः पूर्वपरयोरित्यत्रैकग्रहणञ्च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याह ।

विधेये भेदकं तन्त्रमन्यतोनियमो न हि ।
गृहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५६ ॥

गाऽऽवृत्तौ प्रधानत्वभङ्गाऽऽपत्तिर्यावत्पशुकरणकयागाऽसम्भवेस्त्येवमादयोदोषा हेतवस्तेषामित्यर्थः ॥ सिद्धान्तसिद्धमिति ॥ सिद्धान्ताऽर्थप्रतिपादकमहाभाष्यादिसिद्धमित्यर्थः ॥५५॥ आदेशभेदवारणायेति ॥ वस्तुतस्तु नैकग्रहणं विधेयगतविशेषणाऽविवक्षायां तन्त्रम्॥अनयोः पूलयोः कटं कुर्वित्यादाविवाऽऽद्गुण इत्यादावपि पूर्वपरयोरिति द्वन्द्वनिर्देशेनैकवाक्यतयैवोभयोः स्थाने एकविधानसम्भवात्स्थानिभेदान्नाऽनेको गुण इत्येकग्रहणस्य भाष्ये प्रत्याख्यानादिति रहस्यम्॥ वाक्यभेदादिरिति ॥प्राजापत्या नव ग्रहा इति वाक्यविहितग्रहोद्देशेन सम्मार्गो विधीयते ग्रहं सम्मार्ष्टीत्यनेन तत्राऽनुवाद्यग्रहैकत्वविवक्षायामुत्पत्तिवाक्यगतसङ्ख्याया विरोधाद्वाक्यस्य यो भेदो विभिन्नविशेष्यकबोधजनकत्वं तदापत्त्यादीत्यर्थः ॥ अन्ये तु ग्रहं संमार्ष्टि नचैकमित्याकारकवाक्यभेदाऽऽपत्तिमाहुः॥ आदिपदेनोत्पत्तिवाक्यगतनवत्वसङ्ख्यया ग्रहपदार्थस्य परिच्छिन्नत्वादुत्पत्तिविच्छेदकाकाङ्क्षाभावस्य ग्रहमिति द्वितीयया संस्कार्यत्वलक्षणप्राधान्यबोधनात्प्रति प्रधानं गुणाऽऽवृत्तिरिति न्यायाद्विनिगमनाविरहात् सम्भावनैकनिरासफ

(भेदकम्) विशेषणम् (तन्त्रम्) विवक्षितम् विधेय विशेषणं विवक्षितमित्यस्तु तथाप्यन्यतः अनुवाद्य-स्य नियमो नहि क्वचित्तन्त्रं क्वचिन्नेत्यर्थः ॥ गृहै-कत्वादौ यो हेतुर्वाक्यभेदादिस्तस्यात्राश्रयणमनाक रम् एकत्वविशिष्टं धातुं वलादित्वविशिष्टमार्द्धधातु कञ्चोद्दिश्य प्रत्ययेडागमादेर्विधिसम्भवादिति भावः ॥५६॥ नन्वेवं भिन्नइत्यत्र नकारद्वयलाभो न स्यादि त्यत आह ॥

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ॥
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥५७॥

चकारसूचितं "निष्ठातस्य नः, पूर्वस्य दकारस्य च न इति" वाक्यभेदमादाय नकारद्वयलाभइत्यर्थः॥५७॥

इति वैयाकरणभूषणसारे सङ्ख्याविवक्षानिर्णयः

॥ १२ ॥

लकसंमार्गस्य सर्वैर्ग्रहैरपेक्षणाद्विधेयपश्वादिविशेषणवत् क्रियाङ्गत्वाभावेन तदै ... स्याप्रयुक्तक्रियावैकल्याप्रसक्तेश्च ॥ तद्विवक्षाविरहबीजस्य च सङ्ग्र-हः ॥ अनाकरमिति पूर्ववत् इडागमादेरित्यादिनोदीचामातःस्थानेयकपू र्वायाइतिविहितेत्वसङ्ग्रहः॥तत्राऽऽकारस्थानिकातमुद्दिश्य त्वविधानात्॥

## ॥ अथ क्त्वादिप्रत्ययार्थनिर्णयः ॥

---

क्त्वाप्रत्ययादेरर्थन्निरूपयति ।

अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ।
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥५८॥

तुमादयः तुमुन्नादयः (प्रकृत्यर्थे) भावे । आदिना क्त्वादेः सङ्ग्रहः । भावेइत्यत्र मानमाह अव्ययकृत इति । "अव्ययकृतोभावे" इति वार्त्तिकादित्यर्थः । ननु "समानकर्त्तृकयोः पूर्वकाले" इत्यादिसूत्राणां

अत एवेण्निषेधविधायकैकाजिति सूत्रेऽचइत्येकत्वविवक्षाऽऽदरेणाऽनेका-च्त्वोपदेशव्यावृत्तिर्ग्रन्थकृद्भिर्व्याख्याता॥ वस्तुतस्तु ग्रहैकत्वदृष्टान्तेनाऽऽप्यनुवादविशेषणानां क्वचिदविवक्षाऽस्तु तदितरविशेषणानां विवक्षायां तु न किञ्चिद्बाधकं मीमांसायामनुवाद्यांशे जातिलिङ्गसङ्ख्याऽतिरिक्तविशेषणस्याऽदर्शनादेषाञ्चोत्पत्तिवाक्या देवाऽवगमेनाऽऽनुषङ्गिकत्वादविवक्षा युज्यते प्रकृते तु न तथेति बोध्यम् ॥५६॥५७॥

इति भूषणसारदर्प्पणे सङ्ख्याविवक्षादिनिर्णयः ॥१२॥

---

अवसरसङ्गतिं क्त्वाद्यर्थनिरूपणे दर्शयति ॥ क्त्वाप्रत्ययादेरिति ॥ प्रकृत्यर्थेत्यस्य फलेऽपि सत्त्वादाह ॥ भावइति ॥ तत्राऽपि ॥ सत्वभूते व्यापारे एव

का गतिस्तत्राह समानकर्तृकत्वादीति । अयं भावः भोक्तुं पचति भुक्त्वा व्रजतीत्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययोर्विशेषणविशेष्यभावमन्तरेणानुपपन्ना अन्यथा भुङ्क्ते व्रजतीत्यादावप्येकवाक्यतापत्तेः । तथा च तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गो जन्यत्वं सामानाधिकरण्य, पूर्वोत्तरभावो व्याप्यत्वञ्चेत्यादिरनेकविधः । तथा च भोक्तुं पच-

न तु पूर्वकालादावित्यर्थः ॥ पाक इत्यादाविव पक्तुं पक्त्वेत्यादिजन्यबोधे भावांशे नैलक्षण्यस्याऽननुभवादिति भावः ॥ वस्तुतस्तु पक्त्वेत्यादिजन्यबोधे भावे लिङ्गसङ्ख्याऽनन्वयित्वात्तदनुभूयत एव॥एवं पक्तुमित्यादौ फलाऽर्थकतुमुना साध्यत्वेन तद्बोधाच्चेत्युक्तप्रायमिति॥कागतिरिति॥ तत्र पूर्वकालइत्याद्युपादानात् पूर्वकालादीनां वाच्यता प्रतीयते भावमात्राऽर्थकत्वे तु तदनुपपत्तिरिति भावः ॥ समानकर्तृकत्वादीति ॥ तथा च समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालसम्बन्धी योऽर्थस्तद्वाचकात्क्त्वेत्यर्थेऽर्थाकाङ्क्षायां कर्तरीत्यस्य प्रसक्तौ तद्बाधनाऽर्थं वार्त्तिकाऽऽरम्भणे भावस्यैव वाच्यता निर्धार्यते कर्त्तुः प्रत्ययविशेषणत्वे तु समानकर्त्तरीत्येव ब्रूयात् सूत्रोपात्तानां तु द्योत्यत्वमेव वर्त्तमानत्वादिवदिति भावः ॥ वस्तुतस्तु न द्योत्यतायामपि निर्भरः संसर्गमर्यादयैव तज्ज्ञानसम्भवादित्याह ॥ अयम्भावइति ॥ एकवाक्यतेति ॥ समानकर्त्तृकयोरित्यादिसूत्राणां धातुसम्बन्धाधिकारीयत्वादिति भावः ॥ अनुपपन्नेति ॥ विशेष्यविशेषणत्वयोः संसर्गविषयतानिरूप्यत्वेन सम्बन्धं विना विशिष्टबुद्धेरेवाऽसम्भवात्सम्बन्धभानं तद्वाच्यतां विनाऽप्युपपन्नमिति भावः ॥ अन्यथेति ॥ विशेष्यविशेषणभावमन्तरेणाऽ

ति भुक्त्वा तृप्तः इत्यादौ भोजनजनिका पाकक्रिया भोजनजन्या तृप्तिरिति बोधः । अतएव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि पीत्वा तृप्त इति न प्रयोगः । सामानाधिकरण्यस्यापि संसर्गत्वेनार्थात्समानकर्त्तृकत्वमपि लब्धम् । भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकरण्यञ्च संसर्ग इति भोजनसमानाधिकरणा तदुत्तरकालिकी व्रजनक्रियेति बोधः । अधीत्य

ष्ये कवाक्यताऽभ्युपगमे इत्यर्थः ॥ सामानाधिकरण्यमिति ॥ एकाऽऽश्रयवृत्तित्वमित्यर्थः ॥ पूर्वोत्तरभावः ॥ स्वोत्तरसमयोत्पत्तिकत्वम् ॥ स्वपूर्वसमयवृत्तित्वम् वा ॥ व्याप्यत्वम् ॥ अविनाभावित्वम् ॥ तुमुनाद्यन्ते शाब्दबोधदिशमाह ॥ तथाचेति ॥ भोजनजनिकेति ॥ जनकत्वस्याऽत्रसंसर्गतेति स्फुटीकर्त्तुमियमुक्तिः बोधाऽऽकारस्तु भोजनविशिष्टेत्येव जनकत्वस्याऽपदार्थतयाऽप्रकारत्वात् क्रिययोर्जन्यजनकभावस्याऽपिसम्बन्धत्वे युक्तिमाह ॥ अतएवेति ॥ जन्यत्वस्य संसर्गत्वाऽभ्युपगमादेवेत्यर्थः ॥ जलपानाऽनन्तर्य्यस्येत्यनेन पूर्वोत्तरभावसम्बन्धसत्वं बोध्यते तज्जन्यत्वविवक्षायां तु प्रयोग इष्ट एवेति भावः ॥ सामानाधिकरण्यस्य संसर्गताऽभ्युपगमस्तु यत्र पूर्वाऽपरीभावाऽऽपन्नभोजनतृप्त्योर्वैयधिकरण्यम् तत्र भुक्त्वा तृप्यतीति प्रयोगवारणाय अव्यवहितोत्तरत्वस्य तु दिनान्तरितपूर्वकालवृत्तिसमानाधिकरणभोजनादिक्रियामादाय क्त्वावारणाय व्यवधानञ्च तात्पर्य्यवशाद्दण्डमुहूर्त्तादिना ग्राह्यम् अतो भोजनानन्तरं दण्डादिव्यवधानेऽपि न तादृशप्रयोगाऽनुपपत्तिरिति बोध्यम्॥ननु पूर्वोत्तरभावस्य सम्बन्धताऽभ्युपगमेऽध्ययनकालेऽधीत्य तिष्ठतीति प्रयोगाऽनुपपत्तिः स्थितावध्ययनाऽनन्त

तिष्ठति मुखं व्यादाय स्वपितीत्यादावध्ययनव्यादान योरभावकाले अप्रयोगात् यदा यदास्य स्थितिःस्वापश्च तदा तदाध्ययनं मुखव्यादानञ्चेति कालविशेषावच्छिन्नव्याप्यत्वबोधाद्व्याप्यत्वं सामानाधिकरण्यञ्च संसर्गः । एवञ्चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यत्वला

भोऽभावात् ॥ एवं मुखं व्यादाय स्वपितीति न स्यात् ओष्ठपुटविभागरूपव्यादानकाल एव स्वापाऽऽदिसत्त्वे तादृशप्रयोगस्येष्टत्वेन व्यादानस्य स्वापपूर्वकत्वाऽभावादत आह ॥ अधीत्यतिष्ठतीत्यादि ॥ कालविशेषेति॥ विभिन्नकालिकयोः कालिकसम्बन्धघटितव्याप्यव्यापकभावाऽभावेन तत्सम्बन्धाऽवच्छिन्नत्वस्याऽपि संसर्गतोपगन्तव्या न केवलं तत्र व्याप्यत्वस्यैव संसर्गता किन्तु सामानाधिकरण्यस्याऽपीत्याह॥सामानाधिकरण्यञ्चेति॥ नाऽतो विभिन्नकर्तृकैककालिकाऽध्ययनाऽऽदिकमादायोक्तप्रयोगाऽऽपत्तिरित्थं च समानकर्तृकयोरिति सूत्रविहितक्त्वान्तस्थले समानकर्तृकत्वरूपसामानाधिकरण्यसंसर्गस्य शाब्दबोधविषयता सार्वत्रिकी जन्यत्वादीनां तु तात्पर्यवशात्काचित्की सेति भावः॥ अन्ये तु सामानाधिकरण्यस्यैव पूर्वोत्तरभावस्याऽपि क्त्वान्तजबोधविषयता सार्वत्रिकी ॥ मुखं व्यादायेत्यादौ सुप्ता मुखं व्यादत्त इत्यन्वेव व्यादानोत्तरमपि स्वापाऽनुवृत्तेस्तथा पौर्वापर्यमादाय प्रयोगोपपत्तिः ॥ एवं च पूर्वोत्तरसम्बन्धव्यतिरिक्तसम्बन्धभानस्यैव काचित्कत्वमित्याहुः ॥ न चाऽवजानासि मां यस्मादतस्ते न भविष्यति मत्प्रसूतिमनाराध्य प्रजेति त्वां शशापसेत्यत्र मत्प्रसूतिमनाराध्य ते प्रजा न भविष्यतीत्यर्थाद्विभिन्नकर्तृकादपि क्त्वादर्शनात्समानकर्तृकत्वस्याऽपि क्त्वान्तजन्यबोधविषयता न सार्वत्रिकीति वाच्यम् ॥ सुरभ्यसारात्तादृशस्थले स्थित्यादिक्रियामध्याहृत्याऽनाराध्य स्थितस्येति

भइति युक्तमव्ययकृतोभावे इति। एवञ्च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्य्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनाम्। अतएव समानकर्तृकयोरिति सूत्रे स्वशब्देनोपात्तत्वान्नेति भाष्यप्रतीकमादाय पौर्वापर्य्यकाले द्योत्ये क्त्वादिर्विधीयते न तु विषये इति भाव इति कैयटः। यत्तु समानकर्तृकयोरिति सूत्रात्समानकर्तृ

बोधस्याऽभ्युपगमेन सार्वत्रिकत्वाऽऽपत्तिरिति॥ अन्यलभ्यत्वादिति आकाङ्क्षानियम्यत्वाद्वाक्यशक्तिलभ्यत्वाद्वेत्यर्थः॥ क्रिययोःसंसर्गइति॥ प्रकृत्यर्थविशेषत्वरूपस्य तस्याऽसम्भवेऽपि निरुक्तं यत्तदिह बोध्यमित्यर्थः॥ अतएवेति॥ क्त्वः समानकर्तृकत्वाऽऽदिद्योतकत्वादेवेत्यर्थः॥ भाष्यप्रतीकमिति॥ इदं कस्मान्न भवति पूर्वं भुङ्क्ते पश्चाद्व्रजतीति स्वशब्देनोपात्तत्वादिति भाष्यं तत्र समानकर्तृकेन पूर्वकालत्वेन च क्त्व आपादनम्॥ न तु विषय इति॥ न तु प्रयोगघटकयत्किञ्चित्पदबोध्य इत्यर्थः॥ उक्ताऽर्थानामप्रयोग इति न्यायादिति भावः॥ तथा च समानकर्तृकयोरिति निर्द्धारणे षष्ठीपूर्वकाल इति च षष्ठ्यर्थे बहुव्रीहिरिति कैयटाऽऽशयः। वाक्यार्थस्तु पूर्वमेवोक्तः॥ न च पूर्वकालस्य पूर्वादिशब्देनाऽभिधाने क्त्वोऽप्राप्त्या पूर्वं भुक्त्वा पश्चाद्व्रजतीत्यत्र क्त्वोऽनुपपत्तिस्तदवस्थैवेति वाच्यम्॥ भाष्यकृतैव तत्समाधानात् तथा च भाष्यं नैतत्क्रियापौर्वकाल्यं किं तर्हि कर्तृपौर्वकाल्यमेतत् पूर्वमसौ भुक्त्वाऽन्येभ्यो व्रजितृभ्यः पश्चाद्व्रजतीति॥ अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाऽपरेभ्यो गन्तृभ्यः पश्चाद्व्रजतीत्यर्थे साधनाऽन्तरक्रियाऽपेक्षं पौर्वकाल्यमादाय विभाषाग्रह इति क्त्वः सम्भव इति तदाशयः॥ नव्यास्तु पूर्वकाल इति कर्मधारयः भूत इति तु नोक्तं पर्य्यायशब्दत्वात् तेन रूपेण बोधनाऽननुभवाच्च तथा च समानकर्तृकयोरर्थयोर्मध्ये पूर्व

कर्त्वं क्त्वावाच्यम् अन्यथौदनं पक्त्वाहं भोक्ष्ये इत्यत्र मयेति तृतीयाप्रसङ्गश्च । न चाख्यातेन कर्तुरभिधाना न्न सेति वाच्यम् भोजनक्रियाकर्त्तुरभिधानेऽपि पाकक्रियाकर्त्तुस्तदभावात् अनभिहिते भवतीति पर्यु

काल विशिष्टाऽर्थवृत्तिधातोः क्त्वेति सूत्राऽर्थः॥ तथा च पूर्वकालः क्त्वाऽर्थो धात्वर्थप्रकार एव ॥ अत एव समानकर्तृकत्वेन पूर्वं भुङ्क्ते पश्चाद्व्रजती त्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोपात्तत्वान्नेति परिहृतं भाष्ये पूर्वशब्दस्य पूर्वकालोऽर्थो न तु धातोस्तत्र वृत्तिरिति तदर्थो नतूक्ताऽर्थानामप्रयोग इति ॥ अत एवेह कस्मान्न भवत्यास्यते भोक्तुमित्यग्रिमशङ्कासङ्गतिः ॥ अन्यथा फलाऽर्थकतुमुना पूर्वकालत्वस्याऽऽसिक्रियायां द्योतनात्तदसङ्गतिः स्पष्टैव पूर्वकालत्वस्य ततोऽप्रतीतौ तु कथं क्त्व आपादनं वासरूपन्यायेन लटा साधितमित्यन्यत् ॥ एवं च षष्ठ्या सम्बन्धवाचकत्ववदमीषामपि सम्बन्धवाचकत्वं सुवचमित्याहुः ॥ अत्रेदं चिन्त्यम् ॥ ननु धातोस्तत्र वृत्तिरित्यर्थे आस्यते भोक्तुमित्यग्रिमशङ्काऽनुपपत्तेरुपष्टम्भकत्वेनोपन्यसनं शिथिलं यतः कैयटमतेऽप्यास्यर्थे पूर्वकालसम्बन्धित्वस्य केनचिदनभिधानेनोक्ताऽर्थानामप्रयोग इति न्यायाऽनवतारादाशङ्कोत्थानसम्भव.प्रत्ययशब्दस्यक्त्वाप्रत्ययस्थले धात्वर्थविशेष्यताया नव्यानामपि सम्मतत्वेन पूर्वकालः क्त्वाऽर्थो धात्वर्थप्रकार एवेति पूर्वग्रन्थविरोधश्च ॥ न च द्योतकत्वाऽभ्युपगमादुक्तसङ्गतिः षष्ठ्याः सम्बन्धवाचकत्ववदमीषामपि सम्बन्धवाचकत्वमित्युत्तरग्रन्थविरोधात् ॥ न च तदपि सुवचं समानकर्तृकत्वादीनां वाच्यतायाः सूत्रादलाभात् तस्मात्कर्मप्रवचनीयवत्क्रियासम्बन्धविशेषकत्वमेव क्त्वादीनामिति कैयटोक्तमेव सम्यगिति ॥ * ॥ मतान्तरं दूषयितुमुपन्यस्यति ॥ यत्त्विति ॥ क्त्वावाच्यमिति ॥ समानकर्तृकयोः पूर्वकाले इत्युभयोः

दासाश्रयणात् । अतएव प्रासादे आस्ते इत्यत्र प्रासादनक्रियाधिकरणस्याभिधानेऽप्यस्ति क्रियाधिकरणस्यानभिधानात् सप्तमीति भाष्ये स्पष्टम् । तस्मात् क्त्वाप्रत्ययस्य कर्तृवाचित्वमावश्यकमिति तन्न सूत्रात्तस्य वाच्यत्वालाभात् । समानकर्तृकयोः क्रिययोः पूर्वकाले क्त्वा इत्येव तदर्थात् अन्यथा समानकर्तरीत्येव सूत्रन्यासः स्यात् । तृतीयापादनन्तु आख्यातापदयोर्बहुव्रीहित्वाऽविशेषेण पूर्वकालस्य वाच्यत्वमितराऽर्थस्य[द्यो]त्यत्वमिति वैषम्ये बीजाभावादिति ॥ वैषम्ये बाधकमाह ॥ अन्यथेति ॥ तस्य क्त्वाप्रत्ययाऽवाच्यत्वे इत्यर्थः ॥ तृतीयाप्रसङ्गश्चेति ॥ क्त्वाप्रत्ययेन कर्त्तुरनभिधानादिति भावः ॥ नन्वनभिहितइति सूत्रे नञः प्रसज्यप्रतिषेधाऽर्थकतया प्रकृते कर्तुराख्यातेनाऽभिधानान्न तृतीयापत्तिरित्याशङ्क्य निराचष्टे ॥ नचेति ॥ न चाऽनुपपत्त्या तत्स्वीकारः वक्ष्यमाणभाष्यविरोधात् ॥ तथाचैकेनाऽभिधानेऽप्यन्येनाऽनभिधानात् तृतीयाऽऽपत्तिरित्यभिप्रायेणाऽऽह ॥ पाकक्रियाकर्तुरित्यादि ॥ तदभावादिति ॥ अभिहितभिन्नत्वादित्यर्थः ॥ अनभिहितइति ॥ न प्रसज्यप्रतिषेधो वाक्यभेदादिदोषात् ॥ अतएवेति ॥ तत्सूत्रस्थनञः पर्युदासाऽर्थकत्वादेवेत्यर्थः ॥ भाष्ये इत्यस्याऽनभिहितसूत्रस्थे इति शेषः ॥ तस्येति ॥ समानकर्तृकत्वस्येत्यर्थः ॥ द्विवचनप्रकृतिबहुव्रीहिणा समानकर्तृकत्वस्य धात्वर्थविशेषणतैव प्रतीयते न तु विधीयमानक्त्वा इति भावः ॥ तदेव विशदयति ॥ अन्यथेति ॥ एतत्सूत्रस्य कर्तृशक्तिप्रतिपादकत्वे इत्यर्थः ॥ समानेति ॥ तदुपादानाच्च कर्तृद्वयस्यैव लाभः ॥ न्यासःस्यादिति ॥ कर्त्तरिकृदितिवत् वस्तुतस्तु न तथा सम्भवति कर्त्तरिकृदितिसूत्रेणैव गताऽर्थत्वादव्ययकृतो भाव इति वार्त्तिकवि

